No. 8.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. Oxon.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# SAPTAPADÂRTHÎ

(OF THE VAIŚESHIKA SYSTEM)

OF

ŚIVÂDITYA

TOGETHER WITH ITS COMMENTARY

THE

# MITABHÂSHIṆÎ

OF

MÂDHAVA SARASVATÎ

EDITED BY

RÂMAŚÂSTRÎ TAILAṄGA

ASSISTANT PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. VI.

SANSKRIT TEXT.



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:

JAYESTHARAM MUKUNDJI AND CO., BOMBAY:

OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:

LUZAC AND CO., LONDON:

1893.

# सप्तपदार्थी नाम वैशेषिकप्रकरणम्

## विद्वद्वर्यश्रीशिवादित्यनिरूपितम् ।



श्रीमद्यतीन्द्रमाधवसरस्वतीविरचितया
मितभाषिण्याख्यया व्याख्यया समलङ्कृतम् ।



काशिकराजकीयप्रधानसंस्कृतपाठशालायां साहित्य-
शास्त्राध्यापकेन मानवल्ल्युपाख्येन तैलङ्ग-
रामशास्त्रिणा परिशोधितम् ।



काश्याम्

मेडिकल्हाल्-नाम्नि यन्त्रालये मुद्रितम् ।

सन् १८८३ ईस्वी । शुभम् ॥

॥ श्रीः ॥

# मितभाषिणीसंवलितसप्तपदार्थीभूमिका ।

अथेदानीमुपक्रम्यते मितभाषिण्याख्यया व्याख्यया संवलितस्य सप्तपदार्थीनामकस्य वैशेषिकप्रकरणस्य संमुद्र्य प्रकाशनम् ।

अस्य किल मूलग्रन्थस्य प्रणेता शिवादित्यः शिवादित्यमिश्रो वेति "शिवादित्यकृते टीकां" "शिवादित्यकृतेरकार्षी"दिति टीकाकाराद्यन्तिमश्लोकाभ्यां, बहुषु पुस्तकेषु समाप्तौ "इति श्रीशिवादित्यविरचिते" इति लेखदर्शनात् क्व चित् पुस्तके शिवादित्यमिश्रविरचिते* इति दर्शनाच्चावसीयते । शिवादित्यमिश्र इति सोपनाम सोपाधिकं वा नाम शिवादित्य इति तु केवलं नामेति नात्र कश्चिद् भेदः । एकस्मिंस्तावत् पुस्तके 'व्योमशिवाचार्यविरचिते' इति दृश्यते † तट्टीकाकारादिलेखप्रामाण्याद् भ्रममूलकं स्यादस्यैव वा ग्रन्थकारस्य नामान्तरं वेत्यत्र न निश्चयः । नामान्तरत्वे प्रमाणान्तरं तु नोपलभ्यते ।

अयं च तावच्छिवादित्यः कदा ऽमुं लोकमलंचकारेति विचार्यते । तत्र तावदेतद्ग्रन्थस्य तिस्रो व्याख्या उपलभ्यन्ते, एका जिनवर्धनसूरिप्रणीता ‡ अन्या च शेषानन्तविरचिता पदार्थचन्द्रिकाख्या § तृतीया च श्रीमाधवसरस्वतीविरचिता प्रकृते मुद्रणदशामारूढा मितभाषिणीनाम्नी ।

तत्र १८८२–८३ वर्षमध्ये डा· भाण्डारकरमहाशयसंगृहीतेषु तालपत्रपुस्तकेषु उदयनाचार्यकृततात्पर्यपरिशुद्धिपुस्तकान्ते "न्यायाचार्यपण्डितश्री उदयनकृतौ तात्पर्यपरिशुद्धौ तृतीयो ऽध्याय इति विलिखितं तदग्रे अन्ते एकं विभिन्नं पत्रमङ्का ऽनङ्कितं यत्र भिन्नाक्षरैरेतत्पुस्तकलेखकालः संवत् १३०४

---

* द्रष्टव्यं मि· भा· अन्तिमं पृष्ठम् । † द्रष्टव्यं मि· भा· अन्तिमपृष्ठे टिप्पणम् ।

‡ एतत्पुस्तकं २६१ संख्याङ्कितं मुम्बापुरी (Bombay) पुस्तकालये वर्तते ।

§ एतच्च पुस्तकं २८६ २८७ अङ्काङ्कितं मु· पु· वर्तते । एतद्ग्रन्थोपरि नृसिंहाचार्यविरचिता व्याख्या च वर्तते सापि ७५० संख्याङ्किता तत्र वर्तते । पदार्थचन्द्रिकायाः पुस्तकमेकं काश्यां जडे इत्युपनामकरामचन्द्रदीक्षितपुस्तकालये ऽतिप्राचीनं वर्तते ।

निर्दिष्टः । अग्रे च भिन्नाक्षरैरर्वाचीनैः "संवत् १४७१ (१४१४ ईस्वी सन्) (१३३६) वर्षे खरतरगच्छे श्रीजिनराजसूरिपट्टे श्रीजिनवर्धनसूरीणां पुस्तक"-मिति संलिखितम् ।

अयं च जिनवर्धनसूरिः खरतरगच्छमहापुरोहितस्य स्वाचारात् प्रमत्तस्यात एव पौरोहित्याधिकारात् परिभ्रंशितस्य जिनराजसूरेरुत्तराधिकारी संवत् १४७५ (१४१८ ई०) पर्यन्तं समपद्यत । जिनराजश्च संवत् १४६१ (सन् १४०५ ई०) मृतः । एवं च जिनवर्धनसूरिजन्मकालः १४ ईस्वीशतकाभ्यन्तरे सिध्यति । स चायं सप्तपदार्थीव्याख्यां निरूपितवानिति मूलग्रन्थस्य टीकातः पूर्वभावावश्यकतया (ई०) चतुर्दशशतकात् पूर्वं सप्तपदार्थीकृच्छिवादित्यः प्रादुर्बभूवेति निश्चीयते * ।

एवमस्माभिर्मुद्रणसमये संगृहीतेषु मितभाषिणीपुस्तकेषु विजयनगरसंस्कृतपुस्तकालयपुस्तकान्ते—

"बाणाऽब्धीन्दुमिते शाके सुभानौ वत्सरे कुजे ।
सहस्यासितसप्तम्यां पुस्तं लक्ष्मीधरोऽलिखत्" ॥

इति दर्शनादेतत्पुस्तकलेखकालः शाके १४४५ (सन् १५२३ ई०) (संवत् १५८०) सिध्यति । ततश्च १५ ई० शतकारम्भे ततः पूर्वं वा मितभाषिणीरचनाकालश्चेत्तन्मूलस्य सप्तपदार्थीग्रन्थस्य निर्माता ततः पूर्वकालिक इति स्थिरीभवति ।

अग्रे च विचारे प्रस्तुते वर्धमानोपाध्यायपित्रा गङ्गेशोपाध्यायेन ग्रथिते तत्त्वचिन्तामणिग्रन्थे प्रत्यक्षखण्डे निर्विकल्पकवादे† शिवादित्यमतं तन्नामोल्लेखपूर्वकमुपन्यस्य तत्खण्डनात् ततः प्राचीन इत्यत्र नास्ति विवादावकाशः । गङ्गेशोपाध्यायश्च इतो वर्षसप्तशत्याः पूर्वमासीदिति प्रदर्शितं वैशेषिकदर्शनभूमिकायां बनारससंस्कृतसीरीज्नामकपुस्तकावलीमध्ये मुद्रितायामिति तत एवावसेयमिदम् ।

इतोऽपि चाग्रेऽन्वेषणे क्रियमाणे श्रीहर्षकृते खण्डनग्रन्थे शिवादित्यमिश्रकृतानां "तत्त्वानुभूतिः प्रमे"त्यादीनां लक्षणानां खण्डने प्रकृते शङ्करमि-

* १८८२-८३ वार्षिक डा॰ भाण्डारकररिपोर्ट-पुस्तके २५ पृष्ठं द्रष्टव्यम् ।
† कलिकाता-एशियाटिक्सोसाइटीमुद्रिते तत्त्वचिन्तामणिपुस्तके ८३० पृष्ठं द्रष्टव्यम् ॥

प्रकृतायां तद्व्याख्यायां न्यायाचार्यत्वेनास्य बहुधोल्लेखात्* ततो ऽपि प्राचीनो ऽयमित्यनुमातुं शक्यम्। अयं च श्रीहर्षस्तत्त्वचिन्तामणावनुमानखण्डे "व्याघातो यदि शङ्का ऽस्ति" इति कारिकामुद्भाव्य "इति खण्डनकारमतमप्यपास्त" मिति लेखोपलम्भाद् गङ्गेशोपाध्यायात् पूर्वं जात इति सिध्यति। काव्यप्रकाशकारो मम्मटभट्टश्चास्य संबन्धी गुरुर्वेति वृद्धकिंवदन्त्या तस्य च ८८६ शाकवर्षे (११५० संवत्) जातस्य यशस्करदेवनृपतेः समकालिकतया† श्रीहर्षस्यापि ८८६ शाकवर्षे ततः किं चित् परं पूर्वं वा स्थितिः सिध्यत्येव।

न्यायाचार्यस्तत्रभवानुदयनाचार्यः श्रीहर्षपितुः श्रीहीरस्य समानकालिकस्तेन चास्य विवादो ऽपि समपद्यतेति के चित्‡।

श्रीहर्षसमकालिक एवोदयनाचार्यः श्रीहर्षेण सहैवास्य विवादो ऽभूदिति खण्डनग्रन्थे १ परिच्छेदे 'शङ्का चेदनुमा ऽस्त्येवे' ति न्यायकुसुमाञ्जलि-३परिच्छेदोक्तस्योदयनाचार्यस्य मते श्रीहर्षेण "तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा। त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपीत्यादिना खण्डिते "तच्चालीकं विचारासहमनिर्वचनीयं वे" त्यादिना ग्रन्थेन उदयनाचार्यो ऽपि स्वकृते आत्मतत्त्वविवेके (बौद्धाधिकारे) श्रीहर्षमतं खण्डयामासेति परस्परमतखण्डनेन समकालिकावेव श्रीमदुदयनाचार्यश्रीहर्षाविति परे§।

अस्तु नामानयोः समकालिकत्वं स्वल्पो वा पूर्वापरीभावः परं श्रीहर्षेण शिवादित्यमिश्रोक्तलक्षणानामुट्टङ्कनात् तत्पूर्वकालिकत्वमत एव चोदयनाचार्यसमकालिकत्वं तत्पूर्वभावित्वं वा प्रायशस्तु पूर्वभावित्वमेव वा ऽनुमातुं नास्ति प्रतिबन्धः। तथा च पूर्वोक्तमम्मटभट्टसमयपर्यालोचनया नवमशाकशतकान्ते दशमशाकशतकादौ तदुभयसंधौ वा श्रीहर्षस्योदयनाचार्यस्य च स्थितिकाले सिद्धे ततः प्राचीन एव कालः श्रीशिवादित्यमिश्रस्यापि स्थित्याधार इति प्रतीयते।

अनेनैव च सप्तपदार्थीकारेण शिवादित्यमिश्रेण लक्षणमालाख्यो ऽपि ग्रन्थ उपनिबद्ध इति निश्चीयते। तथा हि—

* काश्यां मेडिकल् हाल्-यन्त्रालये मुद्रिते खण्डनपुस्तके १४४ पृष्ठं द्रष्टव्यम्।
† बनारस् संस्कृतसीरीज् मुद्रितवैशेषिकदर्शनभूमिकायां २७ पृष्ठं द्रष्टव्यम्।
‡ बनारस् संस्कृतसीरीज् मुद्रितवैशेषिकदर्शनभूमिकायां २६ पृष्ठं द्रष्टव्यम्।
§ खण्डनभूमिकायां ७ पृष्ठं द्रष्टव्यम्।

चित्सुखीग्रन्थव्याख्यायां श्रीमत्प्रकाशपूज्यपादशिष्यप्रत्यक्स्वरूपभगवत्कृतायां जातिघटितद्रव्यादिलक्षणखण्डनावसरे* "यानि शिवादित्यमिश्रोक्तानि लक्षणानि लक्षणमालायामुक्तानि तान्यपि निरस्तानी"ति दृश्यते। एवं शङ्करमिश्रकृते खण्डनव्याख्याने ऽपि "न्यायाचार्यकृतलक्षणमालाग्रन्थे" इत्यादिर्लेख उपलभ्यते† । एवं चैतद्ग्रन्थद्वयपर्यालोचनया सिध्यत्येव पूर्वप्रतिपादितो विषयः ।

न चैतद्वक्तव्यं सप्तपदार्थ्या एव नामान्तरं लक्षणमालेति । "न्यायाचार्यकृतलक्षणमालाग्रन्थे प्राथमिकं प्रमालक्षणं खण्डयितुमुपक्रमते" ‡ इति चित्सुखीव्याख्यायां लेखदर्शनात्सप्तपदार्थ्यां च द्रव्यादिलक्षणानामेव प्रथममुपपादनेन प्रमालक्षणस्य प्राथमिकत्वाभावेन लक्षणमालेति ग्रन्थान्तराऽभ्युपगमस्यौचित्यात् । एवं कर्मलक्षणनिरूपणावसरे चित्सुखीव्याख्याने "ननु संख्यावृत्तिसंयोगाऽसमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमदिति वा, संयोगाऽजन्यसंयोगासमवायिकारणवृत्तिसंयोगत्वासमानाधिकरणजातिमद्वेत्यादीनि शिवादित्यमिश्रोक्तानि लक्षणानि भविष्यन्ती"ति लेखो दृश्यते§ । सामान्यलक्षणनिरूपणावसरे च "शिवादित्यमिश्रोक्तं लक्षणमुद्भावयति" इति दृश्यते । एते च कर्मसामान्यलक्षणे न सप्तपदार्थ्यामुपलभ्येते इत्यपि लक्षणमालाया ग्रन्थान्तरत्वे उपोद्बलकम् । एवमन्यत्रापि चित्सुखीग्रन्थे तत्तल्लक्षणान्युपन्यस्तानि यानि नोपलभ्यन्ते तथाविधानि सप्तपदार्थ्यामिति सर्वमेवैतदुक्तार्थसाधकम् । तथा तत्त्वचिन्तामणौ प्रत्यक्षखण्डे निर्विकल्पकवादे "अथ व्यावर्तकं साक्षात्संबद्धं नीलादि परंपरासंबद्धं गृहोपरिभ्रमत्काकादि"इत्यादिना ग्रन्थेन || शिवादित्यमिश्रनामोल्लेखपूर्वकं तत्कृतं विशेषलक्षणं प्रदर्शितं तस्यापि सप्तपदार्थ्यामदर्शनात् तदपि लक्षणमालास्थमेवेत्यवसीयते इति सिद्धं तावत्सप्तपदार्थीलक्षणमालयोर्भिन्नत्वं समानकर्तृकत्वं चेति कृतं बहुना । अधुना प्रकृतान्तरमनुसरामः ।

---

* लिखितपुस्तके १५ पत्रे निरङ्कपृष्ठे ६ पङ्क्तिर्द्रष्टव्या ।
† खण्डनपुस्तके १४४ पृष्ठं द्रष्टव्यम् ।
‡ खण्डनपु॰ १४४ पृ॰ ।
§ लि॰ पुस्तके २३ पत्रे निरङ्कपृष्ठे १ प॰ ।
|| कलिकाता एशियाटिक्॰ मु॰ ८३० पृ॰ ।

मितभाषिणीकारश्चायमुदयनाचार्यादर्वाचीन इति स्वग्रन्थे "तथा चोक्तमुदयनाचार्यैः" * "तथा च किरणावलीकार"† इत्यादिलेखाद् विनिश्चेतुं शक्यते । उदयनाचार्याश्च शङ्करभगवत्पादोत्तरं १०४८ संवत् (६६१ ई० सन्) पूर्वं प्रादुरासन् । शङ्करभगवत्पादाश्च ३८८६ कल्यब्देषु गतेषु विक्रमसंवत् ८४५ (सन् ई० ७८८) (शके ७१०) प्रादुर्बभूवुरिति—

"निधिनागेभवन्ह्यब्दे (३८८६ कलिवर्षेषु गतेषु) विभवे मासि माधवे ।
शुक्ले तिथौ दशम्यां च शङ्करार्योदयः स्मृतः" ॥

इति संप्रदायविदुक्तिं प्रदर्श्य, शङ्करमन्दारसौरभे श्रीकण्ठभट्टोक्तिं "प्रासूत तिष्यशरदामभियातवत्यामेकादशाधिकशतोनचतुःसहस्याम्" इति प्रमाणत्वेनोपन्यस्य स्थिरीकृतं बनारससंस्कृतसीरीज्पुस्तकावल्यां वैशेषिकदर्शनपुस्तकभूमिकाया, ‡ मानन्दाश्रमसंस्कृतपुस्तकावलीगतजैमिनीयन्यायमालाविस्तरभूमिकायां च ।

संक्षेपशारीरककृत्सर्वज्ञात्ममुनिः सुरेश्वराचार्यशिष्यः स्वग्रन्थे ऽन्तिमश्लोके—"चक्रे सज्जनबुद्धिवर्धनमिदं राजन्यवंशे नृपे श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासतीति लिखितवान् । अत्रोक्तो ऽयमादित्यो मनुवंशोद्भवः को वेति निश्चेतुं न शक्यते परं चालुक्यवंशोद्भवा नृपतयो नर्मदामारभ्य मैसूरनगरपर्यन्तं राज्यकारिणो मानव्यगोत्रा इति कथिताः । अयं च मानव्यशब्दो मनुगोत्रोद्भवेषु प्रयुक्त इति संभाव्यते । तेषां च राज्ञामर्वाचीना राजान आदित्या इति प्रसिद्धाः । यथा विक्रमादित्यो, विनयादित्यो, विजयादित्य इत्यादयः । तेषां च राज्यमपहृतं राष्ट्रकूटवंश्यैः ६७५ शकात् (७५३ ई० सन्) पूर्वम् । तेषु चादित्यनामसु चालुक्यवंश्यनृपेषु द्वौ विक्रमादित्यनामानौ बभूवतुः । स्यादेतत्तयोरन्यतरं सर्वज्ञात्ममुनिः स्वग्रन्थे निर्दिशति । यदि तावद् द्वितीय एव निर्दिष्ट इति कल्प्येत यः ६६६ शके (७४० सन्) राज्यमकरोत् तर्हि शङ्कराचार्यजन्मकालः ६८० ई० सन् संनिहितो वक्तव्यो येन तत्प्रशिष्यस्य सर्वज्ञात्ममुनेर्विक्रमादित्यराज्ये ७६६ शके (७४० ई० सन्) स्थितिः संगच्छेत । यदि च तावत् प्रथमो विक्रमादित्यो निर्दिष्ट

* द्रष्टव्यं मि॰ भा॰ १८ पृष्ठम् । † द्रष्टव्यं मि॰ भा॰ ५ पृष्ठम् । ‡ २५ पृष्ठे ।

इत्युच्येत तदा तु ६०१ शके (६७६ ई० सन्) तस्य राज्यात् तत्समकालिकसर्वज्ञात्ममुनेः परमगुरूणां श्रीशङ्कराचार्यचरणानामवतारसमयः ई० षष्ठशतके वक्तव्य इति डा० भाण्डारकरमहाशयो विमृशति * ।

एवं च शङ्कराचार्येभ्यो ऽर्वाचीनाः (६६१ ई० सन्) पूर्वकालिका उदयनाचार्यास्ततो ऽर्वाचीनः (१५२३ ई० सन्) पूर्वकालिकश्चायं मितभाषिणीकृन्माधवसरस्वतीति सिद्धम् ।

अयं च माधवसरस्वती दाक्षिणात्यः सह्याचलसानुवर्तिमहाबलेश्वराधिष्ठितसौराष्ट्रदेशोद्भवः कृष्णातीरनिवासी एकदण्डियतिश्चेति तदीयग्रन्थान्तिमश्लोकैर्निश्चीयते । तथा हि—

सौराष्ट्रदेशो ऽखिलदेशवर्यः सदाकरो दक्षिणभूमिनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ यत्रास्ति गोकर्णमहाबलेशः ॥ १ ॥
तद्देशजन्मा यतिरेकदण्डी सरस्वतीमस्तकमाधवाख्यः ।
सो ऽयं शिवादित्यकृतेरकार्षीद् व्याख्यामिमां बालसुखप्रवृत्त्यै ॥ २ ॥
माधवाख्ययतीन्द्रेण कृष्णातीरनिवासिना ।
कृता सप्तपदार्थ्यास्तु टीकेयं मितभाषिणी ॥ ३ ॥ इति ।

एवं तिसृषु व्याख्यासु मितभाषिणीं सप्तपदार्थ्या सह प्रकाशयितुं प्रवृत्तो ऽहं समपादयं पञ्च सप्तपदार्थीपुस्तकानि । तत्रैकं तावद्वङ्गाक्षरलिखितं काशीसंस्कृतपाठशालीयपुस्तकालयस्थं शुद्धप्रायं, द्वितीयं कै० सोलापुरकररामचन्द्रशास्त्रिणो ऽशुद्धं नातिप्राचीनम् । तृतीयं च पं० पापाशास्त्रिभ्यो गृहीतम् । चतुर्थं च काशिकराजकीयसंस्कृतपाठालयप्रधानाध्यक्षश्रीमदार्थर्वेनिस्—साहेबमहाशयैर्दत्तमादिपत्रविहीनं प्राचीनम् । पञ्चमं च कलिकताएशियाटिक्सोसाइटीपुस्तकालयस्थं † शुद्धं पूर्णं चेति ।

तथा मितभाषिण्यास्त्रीणि पुस्तकानि सङ्कलितानि । तत्रैकं जैनलिपिलिखितं प्राचीनं शुद्धप्रायं पूर्वनिर्दिष्टसाहेबवरैः प्रदत्तम् । द्वितीयमपि

---

* १८८२–८३ वार्षिक डा० भाण्डारकररिपोर्ट् पुस्तके १४–१५ पृष्ठयोरयं विषयो द्रष्टव्यः ।

† अत्र लेखकालः संवत् १६२० कार्तिकवदि तृतीयारवौ गाढागढनगरे राज्यमानवीरसाहिकायस्थगौडान्वयदेवासेन लिखितमिति दृश्यते ।

तैरेव प्रदत्तं प्राचीनं* शुद्धप्रायम्। तृतीयं च विजयनगरसंस्कृतपुस्तकालयस्थं शुद्धतमं खण्डितं प्राचीनं† च।

एवं पञ्च सप्तपदार्थीपुस्तकानि त्रीणि च मितभाषिणीपुस्तकानि समाहृत्य तत्तत्स्थलेषु बहुशो दृष्टान् पाठभेदानधो निवेश्य यथामति पूर्वं संशोध्य मुद्रितान्तिमपत्रशोधसमये काशिकराजकीयसंस्कृतपाठालयीयाध्यापकवरमद्भ्रातृचरणमहामहोपाध्यायश्रीद्वगङ्गाधरशास्त्रिभ्यस्तदनु चोक्तपाठालयनैयायिकशिरोमणिश्रीकैलासचन्द्रभट्टाचार्यमहाशयेभ्यश्च प्रदर्श्य भूयसा परिश्रमेण संशोध्यामुं ग्रन्थं मुद्रणोत्तरं पुनरप्येकवारं निध्याय समुपलब्धा अशुद्धीर्निरदिशं शुद्धिपत्रे, निर्मितवांश्चास्मि मूलटीकोक्तविषयाणामनायासतः स्थललाभायाकारादिक्रमेण विषयसूचीपत्रम्। एवं भूयसाऽऽयासेन शोधितेऽप्यस्मिन् पुस्तके यदि क्व चिन्मदीयाल्पबुद्धिदोषाद् दृष्टिदोषाद्वा दृग्गोचरीभवेयुश्चेदशुद्धयस्तर्हि गुणैकदृष्टयो विपश्चिद्वरा न भवेयुः कथमपि प्राचीनतरैतद्ग्रन्थस्य प्रथममुद्रणसमये मद्दोषोट्टङ्कनमात्रपरा इति दृढमाशासे प्रार्थये च सर्वान्तर्यामिणं श्रीविश्वेश्वरं मदीयपरिश्रमसफलीकरणायेति।

| | |
|---|---|
| फाल्गुनसुदि ८ शुक्रे<br>संवत् १९४९ | काशीस्थराजकीयप्रधानसंस्कृतपाठशालायां<br>साहित्यशास्त्राध्यापको मानवल्ल्युपाख्य-<br>तैलङ्गरामशास्त्री। |

शुभम्।



* संवत् १५३९ वर्षे भाद्रकृष्णप्रतिपत्सोमे लिखितमित्यन्ते लेखः।
† लिपिकालः १४४५ भूमिका २ पृष्ठे द्रष्टव्यः।

# शुद्धिपत्रम् ।

| पृ॰ | पं॰ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | *टी॰ | चेत्यर्थ॰ | चेत्यर्थः |
| २ | ११ | विश्वामित्रा॰ दानाम् | विश्वामित्रादीनाम् |
| ३ | २० | त्यद॰ | स्येद- |
| ८ | ११ | कारणायेवन | कारणायेव न |
| ६ | १० | प्रयोज योः | प्रयोजनयोः * |
| ६ | ११ | प्रयोज का- | प्रयोजनका- * |
| ११ | १५ | विभागसिद्धा | विभागसिद्धा- |
| २० | १५ | सख्याविभा- गोत्तरं पृथक्- त्वविभागः | संख्याविभागोत्तरं १७ प॰ गतपरिमा- णविभागः (टीका- कृत्संमतः) |
| २१ | ३ | संयोगेति । | संयोग इति । |
| २१ | ७ | उभयत्रान्यत्र | उभयत्रान्यतरत्र |
| २७ | ७ | सुवर्णा | सुवर्णा- |
| २७ | ८ | सम्बन्धे | सम्बन्धे- |
| २८ | १६ | ऽनुत्त | अनुक्तं * |
| ३४ | १८ | वताति | वतीति |
| ३४ | २२ | शरारादिकं | शरीरादिकं |
| ४० | १५ | ानत्येति | नित्येति * |
| ४६ | ८ | पृथग्व्यव्यव- | पृथग्व्यव- |
| ४६ | १६ | गुणवृात्त- | गुणवृत्ति- |
| ५२ | ८ | अन्त्या | अन्त्या- |
| ५४ | ४ | साज्ञात्कारीति | साक्षात्कारीति |
| ६० | १ | कारण- | करण |
| ६० | ४ | कारणं | करणं |

* एतच्चिन्हाङ्कितस्थलेषु अक्षरस्खलनादिमा केषु चिदेव पुस्तकेष्वशुद्धयो न सर्वेषु ।

# वर्णक्रमानुसारिसूचीपत्रम् ।

# सप्तपदार्थी ।



हेतवे जगतामेव संसारार्णवसेतवे ।
प्रभवे सर्वविद्यानां शम्भवे गुरवे नमः ॥ १ ॥



## सप्तपदार्थीव्याख्या मितभाषिणी ।



वेदान्तविज्ञानसुनिश्चितार्थैर्योगीश्वरैर्ध्येयमजं विशुद्धम् ।
उमाऽनुमाभ्या*मभिगम्यमानं वन्दे महेशं सदनुग्रहेशम् ॥ १ ॥
विघ्नेशादीन्नमस्कृत्य माधवाख्यसरस्वती ।
शिवादित्यकृते टीकां करोति मितभाषिणीम् ॥ २ ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं कर्त्तव्यविघ्नविघातकं परमेश्वरनमस्कारलक्षणं मङ्गलमाचरन्नर्थाद्विषयप्रयोजने दर्शयति हेतवे इति ॥

ननु नमस्कारादिमङ्गलाचरणं फलप्रमाणयोरभावादयुक्तमिति चेन्न । फलं तावत्कर्तव्यविषयविघ्नध्वंस एव वरीवर्त्ति न त्वभीष्टसमाप्तिः । तत्र हि समाप्तौ मङ्गलस्यान्वयव्यतिरेकाभ्यां व्यभिचारात् । तथा हि । कृते ऽपि मङ्गले कादम्बर्यादौ समाप्त्यभावात् । अकृते ऽपि मङ्गले प्रमत्तनास्तिकाद्यनुष्ठितकर्मसमाप्तेः । विघ्नध्वंसे तु नैवम् । यावन्मङ्गलं तावद्विघ्नध्वंसाऽङ्गीकारात् । विघ्नध्वंसकामानां तादृशाचारानुमितश्रुत्या विघ्नध्वंसकामो नमस्काराद्याचरेदित्येवंरूपया विघ्नध्वंसमङ्गलयोः कार्यकारणभावावबोधनेनाव्यभिचारात् । समाप्तिस्तु प्रतिबन्धकविघ्नध्वंससहकृत†लोकावगतस्वकारणादेव । यथा कारीरीयागेनावग्रहध्वंसे वृष्टिः स्वकारणादेव भवति तद्वत् । क्वचित्समाप्त्यभावस्तु विघ्नभूयस्त्वादन्तरोत्पन्नविघ्नान्तराद्वेति । (नास्तिकानुष्ठितकर्मस-

---

* उमया पार्वत्या अनुमया ऽनुमित्या चेत्यर्थः । एतेनानुमानेनेश्वरसिद्धिः सूचिता भवति ।

† प्रतिबन्धकदुरिताभावसहकृतेति २ पु॰ पाठः ।

माप्तिस्तु जन्मान्तरादनुवर्त्तमानविघ्नाभावात्) * । प्रयोगस्तु † नमस्कारो वेदबोधितकर्तव्यताकः अलौकिकाविगीतशिष्टाचारविषयत्वाद् दर्शाद्याचारवत् । अस्यार्थः । वेदेन बोधिता कर्तव्यता यस्य नमस्कारस्य ‡ स तथा । शेषाद्विभाषेति कप्रत्ययः । निर्विघ्नसमाप्तिकामो मङ्गलमाचरेदित्याचारानुमितवेदेन कर्तव्यता बोध्यते इति साध्यार्थः । ननु समाप्तेरेव काम्यत्वाद् मङ्गलफलत्वापत्तिरिति चेद् न । नाऽगृहीतविशेषणा विशेष्यबुद्धिरिति न्यायेन निर्विघ्नपदवाच्यविघ्नाभावस्यैव फलत्वात् । हेतौ तु आचारविषयत्वादित्युक्ते चैत्यवन्दनादौ व्यभिचारः । चैत्यं नाम बौद्धानां देवस्थानम् । तद्वन्दनस्यापि तदाचारविषयत्वं वरीवर्ति § न तु वेदबोधितकर्त्तव्यताकत्वम् । अतो विशिनष्टि शिष्टेति ‖ । वेदप्रामाण्याऽभ्युपगन्ता शिष्टः । तदाचारविषयत्वं चैत्यवन्दनादौ नास्तीति न व्यभिचारः । एवं विश्वामित्रादीनां त्रिशङ्क्वाद्ययाज्ययाजने व्यभिचारः । तस्य शिष्टाचारविषयत्वे ऽपि वेदबोधितकर्तव्यताकत्वाभावात् । अत उक्तमविगीतेत्याचारविशेषणम् । अविगीतो धर्मशास्त्राऽविरुद्धः । शिष्टानामाचार इत्यर्थः । विश्वामित्रादानाम् अयाज्ययाजनादि तु विगीतमिति तत्र न व्यभिचारः । अविगीतेत्याद्युक्ते शिष्टानां भोजनादौ तदाचारविषये व्यभिचारः । भोजनादेः रागतः प्राप्तत्वेन वेदबोधितत्वाभावात् । अत उक्तम् अलौकिकेति । अलौकिकत्वं वेदैकविषयत्वम् । भोजनं च प्रत्यक्षसिद्धमिति न तत्र व्यभिचारः । अलौकिकश्चासौ अविगीतशिष्टाचारश्चेति समासः ¶ । आचारः प्रयत्नः । तद्विषयत्वादिति हेत्वर्थः । दर्शादिः ** शिष्टाचारविषयो भवति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यादिर्वेदबोधितकर्त्तव्यताको भवति तद्वन्नमस्कारो ऽपि व्याप्तिपक्षधर्मताविशिष्टहेतुमत्त्वाद्वेदबोधितकर्तव्यताक इति प्रमाणार्थः । अतः प्रमाणफलयोः सत्त्वान्मङ्गलाचरणं युक्तमेवेति मत्वा तदाचचार ग्रन्थकारो †† हेतवे इति । शम्भवे नमः इत्यन्वयः । नमःस्वस्तीत्यादिना चतुर्थी । शं सुखं भवत्यस्मादिति

---

* ( ) एतन्मध्यस्थो ग्रन्थः २ पु॰ न दृश्यते । † प्रमाणं तु इति २ पु॰ पा॰ ।
‡ नमस्कारस्येति २ पु॰ नास्ति । § वरिवृतीति इति २ पु॰ पा॰ । उभयमपि साधु ।
‖ एतदग्रे पदमिति त्रुटिरूपेण बहिः शोधितम् ।
¶ अलौकिकश्चासौ अविगीतश्चासौ शिष्टाचारश्चेति समास इति १ पु॰ पा॰ ।
** दर्शादिरपीति २ पु॰ पा॰ । †† तदाचरितं ग्रन्थकर्तेति २ पु॰ पा॰ ।

व्युत्पत्त्या स्रक्चन्दनादेर्नमस्कारः कृतः स्यान्नेश्वरस्य अत आह गुरवे इति । हिताहितप्राप्तिपरिहारोपदेष्टा गुरुः । तस्मै इत्यर्थः । स्रगादेस्त्वचेतनत्वेन गुरुत्वाभावान्न तस्य नमस्कारः । गुरुत्वे हेतुमाह विद्यानां प्रभवे इति । विद्याशब्दो विद ज्ञाने इत्यस्माद्धातोः संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण इति सूत्रेण क्यप्प्रत्ययान्तो ज्ञानवचनः । तेन तदुत्पादकानि विद्यास्थानानि लक्ष्यन्ते । तानि तु

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश * ॥
आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम् ।

इति स्मृत्युक्तानि विद्यास्थानानि । तेषां † प्रभुत्वं तद्वक्तृत्वं ‡ विद्यानां वक्तृत्वाद् गुरुत्वमित्यर्थः । विद्यानां प्रभवे गुरवे शम्भवे नम इत्युक्तेऽपि न विवक्षितेश्वरनमस्कारसिद्धिः । योगिनां मुनीनां च कतिपयविद्यास्थानवक्तृत्वं गुरुत्वं च संभवति अत उक्तं सर्वेति । सर्वविद्यास्थानानां प्रभुत्वं च न वक्तृत्वमात्रं किं तु स्वतन्त्रवक्तृत्वम् । मुनीनां तु गुरुपूर्वकत्वान्न स्वतन्त्रवक्तृत्वमिति परमेश्वरस्यायं नमस्कारो नान्यस्येति सिद्धम् ॥

एतत्तु सर्वे शब्दा व्युत्पन्ना एवेति पक्षमाश्रित्य व्याख्यातम् § । विप्रसंभ्यो ड्वसंज्ञायामिति सूत्रे मितद्र्वादिभ्यश्चेति वार्तिकेनासञ्ज्ञायां डुप्रत्ययविधानाच्च शंभुशब्दो यौगिको व्याख्यातः ॥

अथ पुराणादिप्रसिद्धिबलाच्छम्भुशब्दः परमेश्वरे रूढ इति पक्षमाश्रित्यदमेवोत्तरार्द्धं व्याख्यायते । शम्भवे परमेश्वराय नम इत्यन्वयः । विद्यारम्भे परमेश्वर एव नमस्कार्यः । ईशानः सर्वविद्यानामिति श्रुत्या समस्तविद्यानां प्रभुत्वस्योक्तत्वाद् इति सूचयन् तस्य लक्षणमाह प्रभवे सर्वविद्यानामिति । प्रभुत्वं तत्स्वाम्यं स्वतन्त्रवक्तृत्वमिति यावत् । तच्च परमेश्वरलक्षणम् ‖ । कतिपयविद्यावक्तृव्यावृत्त्यर्थं सर्वेति । योगिव्यावृत्त्यर्थं स्वा-

---

* याज्ञवल्क्यस्मृतिः । १ अ॰ ३ श्लो॰ । † विद्यास्थानानाम् इति १ पु॰ पा॰ ।
‡ स्वातन्त्र्येण तद्वक्तृत्वम् इति २ पु॰ पा॰ । § व्याख्यायीति १ पु॰ पा॰ ।
‖ प्रभुत्वं स्वतन्त्रवक्तृत्वं परमेश्वरस्य लक्षणम् इति २ पु॰ पा॰ ।

तन्त्यं द्रष्टव्यम् । गुरवे शम्भवे नम इति सामानाधिकरण्येन गुरुदेवतयोरैक्येन चिन्तनं (विद्याप्राप्तावन्तरङ्गं तदारम्भे कार्यमिति)* सूचयांबभूव ॥

ननु लक्षणं व्यावृत्तिं व्यवहारं वा जनयति न तद्वस्तु साधयति अतः परमेश्वरसाधनाय प्रमाणं वाच्यम् अत आह हेतवे इति । जङ्गम्यन्ते विनाशमिति† जगन्ति‡ इति उत्पत्तिस्थितिविनाशधर्मकाणि कार्याणि§ तेषां हेतवे निमित्तकारणायेत्यर्थः । जायमानं कार्यं कर्तारं विना न सम्भवतीति तमाक्षिपति स एव परमेश्वर इति प्रमाणं सूचितम् । प्रयोगस्तु‖ सर्वं कार्यं सहेतुकं कादाचित्कत्वाद् यत्सहेतुकं न भवति तत्कादाचित्कमपि न भवति यथा गगनं¶ तथा चेदं कादाचित्कं न भवतीति न तस्मात्सहेतुकं न भवतीति न इति केवल**व्यतिरेकी । हेतुशब्देनात्र कर्ता विवक्ष्यते ऽतो ऽदृष्टादिभिर्न सिद्धसाधनम् ॥

ननु केवलव्यतिरेकी न प्रमाणं व्याप्तिपक्षधर्मताविशिष्टलिङ्गाभावात् । तथा हि । यो यो धूमवान् स सो ऽग्निमान् इति महानसादौ व्याप्तस्य धूमस्य†† पक्षे वह्निव्याप्यधूमवानयमिति ज्ञानस्य अनुमितिजनकत्वं दृष्टं केवलव्यतिरेकिणि तु सहेतुकत्वाभावकादाचित्कत्वाभावयोर्व्याप्तिः कादाचित्कत्वस्य तु पक्षधर्मता । अतो व्याप्तिपक्षधर्मतावैशिष्ट्यं लिङ्गस्य नास्तीति कथं तद्गमकम् । अथ व्यतिरेकव्याप्तिमत्तया अन्वयव्यतिरेकिवत् केवलव्यतिरेकिणो ऽपि अन्वयव्याप्तिरनुमीयते इति मन्यसे तर्हि तत्प्रदर्शनेन विना व्यतिरेकप्रदर्शनाद् अप्राप्तकालता । अवयवविपर्यासवचनमप्राप्तकालतेति सूत्रे‡‡ ऽवयवशब्दोपलक्षणतया तदन्यविपर्यासस्यापि तथात्वाद् इति । अतो न व्यतिरेकी प्रमाणमिति चेद् मैवं मंस्थाः । केवलव्यतिरेकिण्यपि§§ निरुपाधिककेवलव्यतिरेकसहचारेण अन्वयव्याप्तिमनुमाय तद्विशिष्टस्य हेतोर्गमकत्वाऽङ्गीकारात् । न च वाच्यं निरुपाधिककेवलव्यतिरेकसहचारव्याप्त्योरेकत्वात्कथं तेन तदनुमानमुक्तम् आत्माश्रयदोषापत्तेरिति ।

---

* ( ) एतन्मध्यस्थो ग्रन्थः २ पु॰ नास्ति ।
† विनाशमिति १ पु॰ नास्ति ।
‡ जगन्तीति १ पुस्तके नास्ति ।
§ धर्मकं कार्यमिति २ पु॰ पा॰ ।
‖ अनुमानं तु इति २ पु॰ पा॰ ।
¶ यथा गगनमिति १ पु॰ नास्ति ।
** केवलशब्दो नास्ति २ पु॰ ।
†† धूमवत्त्वस्येति २ पु॰ पा॰ ।
‡‡ आदर्शपुस्तकयोरेवमेव पाठः सूत्राकारस्तु अवयवविपर्यासवचनमप्राप्तकालमिति । न्यायसूत्र॰ ५ अ॰ २ आ॰ ११ सू॰ ।
§§ अत्रापीति २ पु॰ पा॰ ।

तयोर्भेदात् । तथा हि । उभयोः सामानाधिकरण्यं सहचारः । (साध्यवत्त्वमित्युक्ते ऽयं प्रदेशो धूमवान् वह्निमत्त्वादित्यादावतिव्याप्तिस्तदर्थं) * साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यवत्त्वं हेतोर्व्याप्तिरित्यतो नाऽप्राप्तकालता । अन्वयव्याप्तेरेव प्रथमं प्रदर्शनात् । अतो न केवलव्यतिरेकी प्रमाणम् । नाप्यप्रमाणम् । नन्वभावयोः सहचारेणाऽन्वयव्याप्त्यनुमाने† अतिप्रसङ्गः । धूमवह्निसहचारेण घटपटयोरपि‡ व्याप्तिमत्त्वप्रसङ्गाद् इति चेन्नैवम् । ययोरभावयोः सहचारः तत्प्रतियोगिनोरेव व्याप्तिरिति प्रतियोग्यनुयोगिभावस्य नियामकत्वात् । व्यतिरेकिसञ्ज्ञा तु अस्य निरुपाधिकव्यतिरेके सहचारादेव ॥

ननु घटादौ हेतुसाध्ययोः सत्त्वादन्वयव्यतिरेक्येवायं न केवलव्यतिरेकी । अथ सर्वस्य पक्षीकृतत्वेन पक्षातिरिक्तसपक्षाभावाद् नान्वयव्यतिरेकित्वमिति मनुषे तदपि न । निश्चितसाध्यवतो हि सपक्षत्वं न तु पक्षातिरिक्तत्वे सतीत्यपि । गौरवेण व्यर्थत्वात् । तथा च किरणावलीकारः पृथिवीनिरूपणे आह स्म समस्तपृथिव्या इतरभेदे साध्ये घट एव दृष्टान्तो ऽस्तु किं व्यतिरेकिणा§ इति । अतो ऽन्वयव्यतिरेकित्वमेवास्येति चेत् सत्यमाह भवान् । तथा हि । अन्वयव्याप्तिवद् व्यतिरेकव्याप्तेरपि गमकत्वाऽवधारणात् । अन्वयव्याप्त्यप्रतिसंधाने व्यतिरेकप्रयोगाऽसम्भवात् । यद्वा पक्षातिरिक्त एव सपक्ष इति मतमाश्रित्याऽयं प्रयोगो द्रष्टव्यः । बहुवादिसंमतत्वात् । प्रमाणवतो गौरवस्यापि न्यायोपपन्नत्वाद्|| इति । अत एवाह स्म आचार्यस्तत्रैव सिद्धान्ते आस्तां तावत्सुहृदुपदेशो व्यतिरेक्यनुमानं तु निर्व्यूढमिति । अथ वा सहेतुकमिति साध्यस्थाने सर्वविद्धेतुकमिति कर्तव्यं¶ तथा च नान्वयित्वाशङ्का ॥

नन्वत्र सर्वविद्धेतुकस्याऽप्रसिद्ध्या ऽप्रसिद्धविशेषणः पक्षः । को दोष इति चेदयं दोषः । व्यतिरेकिसाध्याऽप्रसिद्धौ तन्निरूपणाधीनसाध्याऽभावसाधनाऽभावयोर्व्याप्तिर्न निरूप्येत । सामान्यज्ञानाभावेन पक्षे साध्यसन्देहानुपपत्तौ संदिग्धसाध्यवतः पक्षस्याभावापत्तिः । तथा साध्यलक्षण-

* ( ) एतन्मध्यस्थो ग्रन्थः २ पु॰ नास्ति ।
† नन्वन्ययोः सहचारेणान्यव्याप्तौ इति २ पु॰ पा॰ । ‡ सहचारेण रासभस्यापीति २ पु॰ पा॰ ।
§ किं केवलव्यतिरेकिणेति २ पु॰ पा॰ ।
|| न्याय्यत्वादिति २ पु॰ पा॰ । ¶ सर्वविद्धेतुकं कर्तव्यमिति २ पु॰ पा॰ ।

विशेषणज्ञानाभावात् साध्यविशेषणकपक्षविशेष्यकानुमित्यनुपपत्तिः । विशेषणज्ञानकारणाभावात् । तथाचाऽप्रसिद्धविशेषणत्वे दोषत्रयं व्याप्यनिरूपणाद् व्याप्यत्वासिद्धिः पक्षानिरूपणाद् आश्रयासिद्धिः अनुमित्यनुदयाद् बाधश्चेति । तस्मात्सर्वविद्धेतुकस्य प्रसिद्धिर्वाच्येति चेत् सत्यम् । अस्त्यत्रापि सामान्यतः प्रसिद्धिः । तथा हि । किञ्चिज्ज्ञहेतुकत्वम् अहेतुकव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगि व्यतिरेकिधर्मत्वाद् घटत्वादिवत् । प्रमेयत्वादौ व्यभिचारवारणाय व्यतिरेकीत्युक्तम् । आकाशादिनिष्ठात्यन्ताभावप्रतियोगितया सिद्धसाधनतावारणाय अहेतुकव्यतिरिक्तनिष्ठात्यन्ताभावविशेषणम् । तथा च किञ्चिज्ज्ञहेतुकत्वं* यतो व्यावर्तते तदेव सर्वविद्धेतुकं प्रसिद्धम्† । तत्तु वस्तुगत्या पक्ष एव । तत्र केवलव्यतिरेकिणा तद्विशेषतः साध्यतइति नाप्रसिद्धविशेषणः पक्षः । तस्माज्जगतां हेतवे इत्यनेन ईश्वरसाधकं व्यतिरेक्यनुमानमसूचयत् ॥

यद्वा अनेनान्वयव्यतिरेक्यनुमानमेव असूचयत् । तथा हि । गिरिदरीविवरवर्त्तिनो ऽङ्कुराः सकर्तृकाः कार्यत्वाद् घटवदिति ॥

नन्वयं संदिग्धानैकान्तिकः । क्षित्यादौ संदिग्धसाध्यवति हेतोः सत्त्वात् । न च निश्चितसाध्याभाववति हेतुसंदेहे संदिग्धाऽनैकान्तिकता । अत्र ‡ साध्यस्यैव सन्देहो न हेतोरिति वाच्यम् । हेतुः साध्याभाववद्गामी न वेति सन्देहे संदिग्धानैकान्तिकता । स च सन्देहः साध्याभाववति हेतुसन्देहाद्धेतुमति वा साध्यसन्देहात् । तदत्र क्षित्यादौ कार्यत्वहेतोर्निश्चयेऽपि साध्यसन्देहाद्धेतोः साध्याभाववद्गामित्वे सन्देहो ऽस्त्येव । किं चेदं सकर्तृकत्वं कर्त्रा सह वर्तमानत्वं वा कर्तृजन्यत्वं वा । नोभयथा ऽपि । सिद्धसाधनात् । तथा हि । जीवानां विभुत्वेनाङ्कुराणां तैः सह वर्तमानत्वाद्बीजकादृष्टजन्यत्वेन जीवजन्यत्वाच्च सिद्धसाधनम् । अथोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं सकर्तृकत्वम्§ । उपादानं समवायिकारणम् । तद्गोचरो विषयो यासामपरोक्षज्ञानचिकीर्षाकृतीनां तास्तथा । इदम् अस्य उपादानमिति लिङ्गाद्यजन्यं ज्ञानम् अपरोक्षम् । इदं करिष्यामीति कर्तुमिच्छा

* यतः किं चिज्ज्ञहेतुकत्वमिति २ पु॰ पा॰ । † सर्वविद्धेतु कत्वं प्रसिद्धमिति १ पु॰ पा॰ ।
‡ अत्र चेति २ पु॰ पा॰ । § सकर्तृकत्वमिति २ पु॰ नास्ति ।

चिकीर्षा । कृतिः प्रयत्नः । एताः यस्यासौ तद्वान् तेन जन्यत्वमिति विवक्षितम् * । एतच्च नास्मदादीनामिति न सिद्धसाधनमिति चेन्नैवम् । सिद्धसाधनत्वादेव अस्मदाद्यपरोक्षज्ञानादेरप्यदृष्टद्वारा ऽङ्कुराद्युपादानगोचरत्वात् । तथा हि । इष्टसाधनताज्ञानस्य परोक्षत्वे ऽपि यागादिसाधनद्रव्यादौ प्रवृत्तिविषये ऽपरोक्षज्ञानमस्त्येव न स्तस्तत्र चिकीर्षाप्रयत्नौ । ततो यागादिना ऽदृष्टं जायते तेन च भोजकादृष्टेन तत्तदुपादानसहितेनाङ्कुरादि जन्यते । अतो ऽस्मदादिनैव सिद्धसाधनमिति दुष्टमिदमनुमानमिति चेन्नैवं वादीः ।

न तावत्संदिग्धानैकान्तिकः । साध्यसन्देहवति निश्चितस्य हेतोस्तथात्वाभावात् । अन्यथा सर्वेषां हेतूनां पक्षे संदिग्धसाध्यवति वृत्तेर्दुष्टत्वप्रसङ्गात् । तथा च सकलानुमानोच्छेदः । अत एव सिद्धान्तप्रवादो ऽपि न हि पक्षे पक्षतुल्ये व्यभिचार इति । अपि च पक्षव्यतिरिक्तघटादौ कार्यत्वहेतोः† सकर्तृकत्वेन सह ‡ व्याप्त्यवधारणात् । स च हेतुः क्षित्यादौ समे ऽङ्कुरे पक्षे वर्तमानः सममेवोभयत्र साध्यं साधयेदिति निश्चितव्याप्तेर्हेतोः संदिग्धसाध्यवति वर्तमानस्य साध्यसाधकत्वनियामकत्वात् § । सकर्तृकत्वं चेदं विवक्षितम् । अदृष्टाद्वारकोपादानगोचरा ऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम् । अदृष्टं धर्माधर्मौ द्वारं व्यापारो न विद्यते यासां ता अदृष्टाद्वारकाः । अदृष्टाद्वारकाश्च ता उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतयश्च तद्वता जन्यत्वं सकर्तृकत्वमित्यर्थः । तथा च नास्मदादिना सिद्धसाधनम् । अस्मज्ज्ञानचिकीर्षाकृतीनाम् अदृष्टद्वारं विना उपादानगोचरत्वाभावेन अदृष्टाद्वारकत्वा ऽभावात् । भोक्तृज्ञानमदृष्टद्वारा हेतुः । कर्तृज्ञानं चिकीर्षाद्वारा । कृतिः शरीरचेष्टादिद्वारा । तथा चात्र अदृष्टाद्वारकविशेषणेन भोक्तृजन्यत्वे निवारिते कर्तृजन्यत्वेन पर्यवस्यदीश्वरजन्यत्वमेव सिद्ध्यति । अतो न कश्चिद्दोष इति सिद्धम् ॥

ननु तथापि प्रध्वंसस्य || उत्पद्यमानकार्यत्वे ऽपि उपादानकारणाभावेन तद्गोचरज्ञानादिमतो ऽभावात् तज्जन्यत्वं नास्तीति हेतुरनैकान्तिक इति चेन्नैवम् । प्रागभावप्रतियोगित्वे सति समवेतत्वादिति हेत्वर्थस्य वि-

* जन्यत्वं विवक्षितमिति २ पु॰ पा॰ ।
† कार्यत्वादिति हेतोरिति २ पु॰ पा॰ ।
‡ सहेति २ पु॰ नास्ति ।
§ नियमादिति २ पु॰ पा॰ ।
|| ध्वंसस्येति २ पु॰ पा॰ ।

वच्चितत्वात् * । तदयं संक्षेपः । अङ्कुरा अदृष्टाद्वारकोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्याः प्रागभावप्रतियोगित्वे सति समवेतत्वाद् यदुक्तसाधनं तदुक्तसाध्यं † यथा पट इत्युपरम्यते विस्तरात् ॥

जगतामेवेत्येवकारः कार्त्स्न्यवाची अव्ययानामनेकार्थत्वात् । तथा चायमर्थः ‡ । समस्तस्य कार्यस्य हेतुः परमेश्वरो न तु कुलालादिवत् कतिपयकार्यस्येति § । बहुवचनस्य कपिञ्जलाधिकरणन्यायेन त्रित्वेनापि सम्भवात् । अथ वा एवकारो भिन्नक्रमः हेतवे एवेति । स चायोगान्ययोगव्यवच्छेदार्थः । जगतां हेतुत्वम् ‖ ईश्वरस्य सदा वर्तते न तु कदा चिन्नास्तीति । एवं च क्षणिकः सर्वज्ञो जगद्धेतुः कपिलादिर्वेदादिहेतुः हिरण्यगर्भ एव स्वतन्त्रो जगद्धेतुः प्रधानं¶ जगद्धेतुरित्यादिमतानि निराकरिष्यन्ते । यद्वा हेतवे निमित्तकारणायैव न तु वेदान्तिवदुपादानकारणायापीति सूचितम् । उपादानत्वे कार्यस्यापि सचेतनत्वप्रसङ्गाद् इति संसारस्थितिहेतुत्वेनापि परमेश्वरः सिध्यतीति । प्रमाणान्तरं बाहुल्यसूचनायाह संसारार्णवसेतवे इति । संसारः एकविंशतिप्रकारदुःखसंबन्धः स एवार्णवो दुस्तरत्वाद् अनादित्वेनागाधत्वाच्च । तस्य सेतवे विधारकाय । यथा सेतुर्जलादेराधारः तथा संसारिणां जगताम् आधारः स्थितिहेतुरित्यर्थः । स एष ** सेतुर्विधरणम् एषां लोकानामसम्भेदायेति श्रुतेः । सेतुशब्देन सेतुगतं विधरणत्वं लक्ष्यते । प्रयोगस्तु जगतां धृतिः साक्षात्परम्परया वा प्रयत्नसाध्या धृतित्वाद् गगनतलवर्तिखगशरीरधृतिवत् तद्वदनगत††मांसधृतिवत् । यद्वा एतच्छास्त्रप्रतिपाद्यमोक्षकारणत्वेन ईश्वरदर्शनान्मोक्षप्रयोजनवत्त्वं शास्त्रस्य दर्शयति संसारेति । संसारार्णवस्य दुःखसमुद्रस्य पारप्रापकः । यथा सेतुः पारावारवर्ती पारं प्रापयति तथा ऽयमीश्वरो ऽपि संसारपारस्य मोक्षस्य प्रापक इत्यर्थः । एवं मनोवाक्कायकर्मभिः क्रियमाणं त्रिविधं प्रह्वीभावलक्षणं मङ्गलाचरणं शि-

* सति समवेतत्वस्य हेत्वर्थात् इति २ पु॰ पा॰ ।

† यदुक्तसाधनं भवति तदुक्तसाध्यम् इति २ पु॰ पा॰ ।

‡ तथायमर्थः सिद्ध इति २ पु॰ पा॰ । § कतिपयस्येति २ पु॰ पा॰ ।

‖ जगद्धेतुत्वम् इति समस्तः पाठः २ पु॰ । ¶ प्रकृतिपुरुषप्रधानमिति १ पु॰ पा॰ ।

** एष सेतुरिति स इत्येतद्रहितः पाठः २ पु॰ । †† खगशरीरतद्वदनगतेति २ पु॰ पा॰ ।

ष्यशिक्षायै निबबन्ध । ग्रन्थे मङ्गलाचरण*व्याजेन चार्थाद्विषयप्रयोजनसम्बन्धाधिकारिणः समसूचिषत ।

ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः † ॥

इति न्यायेन श्रोतॄणां सुखप्रवृत्तये ग्रन्थादौ अनुबन्धचतुष्टयस्य अवश्यं वक्तव्यत्वात् ‡ तदुच्यते । काणादशास्त्रस्येदं प्रकरणम् । अतस्तदीयानुबन्धचतुष्टयादेवास्यापि तद्वत्त्वम् । तत्र परमेश्वरो महान् विषयः । मोक्षश्च महत् प्रयोजनम् । पदार्था अवान्तरविषयः । तत्त्वज्ञानमवान्तरप्रयोजनम् । विषयशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । विषयप्रयोजनयोर्विषयविषयिभावः सम्बन्धः । शास्त्रप्रयोजनयोः साध्यसाधनभावः सम्बन्धः । प्रयोजनकामो ऽधिकारी । नन्वेवं शास्त्रप्रकरणयोः को भेद इति चेत् ।

शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः § ॥

इति लक्षणकृतो भेदो ऽस्ति । अतो ‖ बालबोधनमवान्तरप्रयोजनम् ॥

## प्रमितिविषयाः पदार्थाः ॥

अथेदानीं ¶ चिकीर्षितं ग्रन्थमारभमाणः पदार्थसामान्यं स्वरूपतो निर्दिशति प्रमितिविषयाः पदार्था ** इति । पदार्था इति सामान्येनोद्देशः । तेषां स्वरूपं प्रमितिविषया इति । प्रमितिर्यथार्थज्ञानं तस्य विषयाः प्रमेया इत्यर्थः । प्रमेयत्वमेव पदार्थशब्दस्य प्रवृत्तिनिमित्तमित्यनेन दर्शितम् । न तु प्रमितिविषयत्वं पदार्थसामान्यलक्षणम् । केवलान्वयित्वेन †† प्रमेयत्वस्य लक्षणत्वायोगात् । केवलव्यतिरेकिहेतुविशेषो लक्षणमिति लक्षणस्याभिधास्यमानत्वात् । नन्वत्रापि भ्रमविषयो व्यावृत्तो ऽस्ति इति चेद् न ।

* शिष्यशिक्षार्थं ग्रन्थे निबद्धं मङ्गलाचरणेति १ पु॰ पा॰ ।

† मीमांसाश्लोकवार्तिके १ सूत्रव्याख्यावसरे १७ श्लोकः । तत्र च सिद्धार्थं ज्ञातसम्बन्धमित्यादिः पाठः । ग्रन्थादौ तेनेत्यादिः २ पु॰ पा॰ ।

‡ अवश्यं वाच्यत्वादिति २ पु॰ पा॰ ।

§ पराशरोपपुराणे १६ अ॰ अग्रे ।

‖ भेदो ऽस्ति यत इति २ पु॰ पा॰ ।

¶ इदानीमिति २ पु॰ नास्ति

** पदार्था इति २ पु॰ नास्ति ।

†† तस्येति १ पु॰ अधिकम्

तस्यापि कदा चित्प्रमेयत्वात् । शुक्तिर्वा रजतं वा तादात्म्यं वा भ्रमविषयो रजतत्वसंसर्गो वा ते सर्वे प्रमेया एव । इदानीं * प्रमाविषयो न भवतीति चेत् तर्हि पदार्थानामपि स्मृतिविषयतासमये ऽपदार्थत्वापत्तिः कदा चित्ते प्रमेया एवेति यदि भ्रमविषयो ऽपि तर्हि तथेति तुल्यम् । किं च पदार्थशब्दो यौगिको वा रूढो वा । आद्ये भ्रमविषयस्यापि पदार्थत्वात् तद्व्यावर्तनमयुक्तं स्यात् । लक्षणेन हि लक्ष्यादन्यद् व्यावर्त्यते † न तु लक्ष्यमेव । भ्रमविषयश्च ‡ पदार्थशब्दवाच्यत्वाद् लक्ष्यादनन्य एव § । न द्वितीयः । रूढिर्हि सप्तपदार्थ्यामेव सैव च भ्रमस्यापि ‖ विषयः । अन्यथा अन्यथाख्यात्यनुपपत्तेः । अन्यत्र सदेवान्यत्र भातीत्यन्यथाख्यातिः । तथा च द्वितीये पक्षे ऽपि सप्तपदार्थ्येव भ्रमविषय इति तस्यापि लक्ष्यत्वात् तद्व्यावर्तनं पुनर्व्यर्थमेव ¶ । प्रमेयत्वं व्यतिरेकिधर्म ** इति च वदतो वैशेषिकस्याऽपसिद्धान्तश्च । आ कणादान् मुने††रद्य यावत् प्रमेयत्वाभिधेयत्वादिधर्मः केवलान्वयीति सिद्धान्तप्रवादस्य प्रतीयमानत्वात् । अथ ग्रन्थकार एव ‡‡ पदार्थसामान्यलक्षणं तूक्तमेवेति वक्ष्यति अतस्तद्विरोध इति चेन्न । तत्र हि §§ तस्य गतिं वक्ष्यामः । ननु भ्रमस्यापि‖‖ प्रमितिविषयत्वे कथं तस्य भ्रमत्वसिद्धिः इति चेत् शृणु । इदंत्वरजतत्वयोर्व्यधिकरणयोः इदं रजतमिति सामानाधिकरण्येन विषयीकरणाद्¶¶ व्यधिकरणप्रकारत्वेन भ्रमत्वमिति तत्***स्वरूपकथनं प्रवृत्तिनिमित्तकथनं चातिसूक्तमिति ॥

**ते च द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाख्याः सप्तैव ॥**

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ॥**

---

* तदानीमिति १ पु॰ पा॰ ।
† व्यावर्तते इति २ पु॰ पा॰ ।
‡ भ्रमविषयस्यापि इति १ पु॰ पा॰ । परमुपरितन एव समञ्जसः प्रतिभाति ।
§ लक्ष्य एवेति २ पु॰ पा॰ ।
‖ भ्रमविषयस्यैवेति २ पु॰ पा॰ ।
¶ पूर्ववद् व्यर्थमेवेति १ पु॰ पा॰ ।
** व्यतिरेकधर्म इति २ पु॰ पा॰ ।
†† आ कणादमुनेरिति २ पु॰ पा॰ ।
‡‡ ननु ग्रन्थकार एवेति २ पु॰ पा॰ ।
§§ हिशब्दः २ पु॰ नास्ति ।
‖‖ अपिशब्दो नास्ति २ पु॰ ।
¶¶ प्रमाविषयीकरणादिति २ पु॰ पाठः ।
*** ततश्चेति २ पु॰ पा॰ ।

के पदार्थाः कियन्त* इति जिज्ञासायामाह ते चेति । ते पदार्थाः सप्तैवेति सम्बन्धः । द्रव्यस्य सर्वपदार्थाधारत्वेन समवायिकारणत्वेन च प्राधान्यात् प्रथममुद्देशः । गुणजातीयस्य सर्वद्रव्यवृत्तित्वादुत्पत्त्युत्तरक्षणमेवोत्पन्नत्वेनातिसांनिध्याच्च गुणस्य तदानन्तर्यम् । कर्मजातीयस्य तद्वैपरीत्याद् जात्याधारत्वाच्च तदानन्तर्यम् † । सामान्यस्य अनुवृत्तित्वेन त्रितयगतत्वेन च बहुविषयत्वात्तदानन्तर्यम् । विशेषस्य समवेतत्वात्सामान्यप्रतियोगिकत्वाच्च ‡ तदानन्तर्यम् । एतेषां पञ्चानां सम्बन्धत्वेन समवायस्य तदानन्तर्यम् । षण्णां निषेधरूपत्वेनाभावस्य तदानन्तर्यम् । इत्युद्देशक्रमः । एवमुत्तरत्राप्यूहनीयम् । विस्तरभयान्नातिप्रयोजनाच्च § नोच्यते । एवकारो ऽयोगान्ययोगव्यवच्छेदार्थः । अत्रैतावदस्त्येव न न्यूनमिति तावदयोगव्यवच्छेदः । अन्यस्यात्र सम्बन्धो नास्तीत्यन्ययोगव्यवच्छेदः । तथा च शङ्खः पाण्डुर एवेतिवत्पदार्थाः सप्तैवेति वचनव्यक्त्या संख्याया विशेषणसंगत एवकारो ऽयोगं व्यवच्छिनत्ति । यदा तु पार्थ एव धनुर्धर इतिवत् सप्तैव पदार्था इति विशेष्यसंगत एवकारस्तदा ऽन्ययोगं व्यवच्छिनत्ति । इत्युभयव्यवच्छेदसिद्धिर्यथावस्थितेन एवकारेण भवति । एवमग्रे ऽप्येवकारो बोद्धव्यः‖ । चकारो¶ जिज्ञासानिवृत्त्यर्थः । संख्याशब्दो विभागसिद्धामेव संख्यां स्फुटयति** । द्रव्याणि संचष्टे†† तत्रेति । तत्र सप्तसु मध्ये इत्यर्थः ॥

## गुणास्तु रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माऽधर्मशब्दाश्चतुर्विंशतिरेव॥

गुणान्विभजते गुणास्त्विति । तुशब्दः पूर्वापेक्षया वैलक्षण्य‡‡द्योतनार्थः । गुणेषु यद्यपि गुणाऽनङ्गीकाराच्चतुर्विंशतिरित्ययुक्तं§§ तथापि संख्यागुणयोरेकार्थसमवायसम्बन्धादुपचारेण तत्र संख्याव्यवहार इति न दोषः ॥

---

* के ते पदार्थाः कियन्त एवेति २ पु॰ पा॰ । † तदानन्तर्यं कर्मण इति २ पु॰ पा॰ ।

‡ सामान्यं प्रति गुणापेक्षया न्यूनवृत्तित्वात् तदुत्तरभावित्वाद्वा । योगित्वाच्चेति १ पुस्तके ऽसङ्गत इव पाठो दृश्यते । उपरितनपाठे तु सामान्यप्रतियोगिकत्वादित्यस्य सामान्यस्यानेकवृत्तितया विशेषस्य चैकव्यक्तिवृत्तितया सामान्यापेक्षया वैलक्षण्यादित्यर्थः सङ्गच्छेतेति भाति ।

§ नातिप्रसञ्जनाच्चेति २ पु॰ पा॰ ।  ‖ द्रष्टव्य इति २ पु॰ पा॰ ।

¶ ते चेति चकार इति २ पु॰ पा॰ ।  ** स्पष्टयतीति १ पु॰ पा॰ ।

†† परिसंचष्टे इति २ पु॰ पा॰ ।  ‡‡ पूर्ववैलक्षण्येति २ पु॰ पा॰ ।

§§ चतुर्विंशतिरित्युक्तमयुक्तमिति २ पु॰ पा॰ ।

**कर्माणि उत्क्षेपणाऽपक्षेपणाऽऽकुञ्चनप्रसारणगमनानि पञ्चैव ॥**

कर्माणि विशेषत उद्दिशति* कर्माणि इति । ननु संयोगविभागपरंपराव्यतिरेकेण कर्मैव न पश्याम इति चेद् न । न ह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यति । चलतीत्येवमाकारेण संयोगादिविलक्षणस्य प्रत्ययस्य सर्वजनीनत्वात् । न चेदं प्रत्यक्षमिति चेद् न । तत्रापि अनुभव एवोत्तरम् । चलनं साक्षात्करोमीत्यनुभवात् । भ्रमणरेचनस्यन्दनन्नमनोन्नमनानां गमने अन्तर्भावान्नाऽवधारणानुपपत्तिः । संख्या चौपचारिकी । उपचारस्तु संख्याकर्मणोरेकद्रव्याश्रितत्वम् ॥

**सामान्यं परम् अपरं परापरं चेति त्रिविधम्† ॥**

**विशेषास्तु यावन्नित्यद्रव्यवृत्तित्वा‡दनन्ता एव ॥**

सामान्यं त्रेधा विविनक्ति सामान्यं चेति§ । विशेषाणां विभागाभावे हेतुमाह विशेषास्त्विति । अनन्ता असंख्याताः । तत्र हेतुः यावन्नित्यद्रव्यवृत्तित्वाद् इति । यावन्ति नित्यद्रव्याणि गगनादिपञ्चकं‖ चतुर्विधाः परमाणवः तत्र वृत्तिर्येषां तेषां भावस्तत्त्वं तस्मात् । नित्यद्रव्याणामसंख्यातत्वात् तदाश्रिता विशेषा अप्यनन्ता इत्यर्थः ॥

ननु गुणेषु¶ किमिति विशेषा नाभ्युपेयन्ते । जात्या तद्व्यावृत्तिसंभवान्नाभ्युपगम इति चेद्धन्त तर्हि जातिगुणक्रियाभिर्नित्यद्रव्याणामपि व्यावृत्तिसंभवात् तत्रापि तदभ्युपगमो** न युक्तः†† । अथ ते द्रव्ये ऽभ्युपेयन्ते तर्हि गुणेष्वप्यभ्युपेयन्ताम् इति चेद् मैवम् । नित्यगुणा हि जलपरमाण्वादिगता रूपादयस्तेषां व्यावर्तका रूपत्वाऽवान्तरशुक्लतमत्वादयः सम्भवन्ति । अवान्तरजातीयव्यक्तिष्वपि विशेषाश्रिताश्रयविशेषेण तद्व्यावृत्तिः सम्भवति । गगनात्कालदिशोस्तयोश्च परस्परमुक्तात्मनां च मिथो मनसां चेतरेतरं व्यावृत्ति-

---

* विभजते इति २ पु॰ पा॰ । † सामान्यं त्रिविधं परमपरं परापरं चेति ३ पु॰ पा॰ ।

‡ यावन्नित्यद्रव्यवृत्तय इति ३ पु॰ व्याख्याकाराऽनुपलब्धः पाठः ।

§ त्रेधा विभागीकृतं विविनक्ति सामान्यं चेतीति १ पु॰ पा॰ ।

‖ गगनादीनि पञ्चेति २ पु॰ पा॰ । ¶ नित्यगुणेष्विति २ पु॰ पा॰ ।

** विशेषतदभ्युपगम इति १ पु॰ पा॰ ।

†† तत्रापि तदनभ्युपगमो युक्त इति २ पु॰ पा॰ ।

विशेषपदार्थान्तरं विना * ऽयोगिनां न सम्भवति । परमाणुष्वपि सत्ताद्रव्यत्वपृथिवीत्वादिव्यतिरिक्तावान्तरजातेरभावात् तेष्वपि समानजातिगुणकर्मसु मिथोव्यावृत्तबुद्धे†र्विशेषपदार्थं विना ऽसम्भवात् तत्रापि तत्सिद्धिः । कुतः परमाणुषु नाऽवान्तरजातिरिति चेत् शृणु । परमाणुषु जाते‡रन्त्यकार्यवृत्तित्वदर्शनात् पृथ्वीत्वादिवत् सापि जातिर्घटादावपि वर्तेत§ तथा च नाऽवान्तरजातिमत्त्वमिति । तस्मान्नित्यद्रव्येष्वेव विशेषपदार्थाङ्गीकारो नान्यत्रानित्येष्विति साधूक्तं यावन्नित्यद्रव्यवृत्तित्वाद् अनन्ता एवेति ॥

**समवायस्त्वेक एव ॥**

समवायविभागाभावे हेतुमाह समवायस्त्वेक एवेति । इह तन्तुषु पटः इह शौक्ल्यम् इह चलनम् इह पटत्वमित्यादिषु द्रव्यगुणकर्मसामान्यप्रत्यया विशेषणविशेष्यसम्बन्धनिमित्ताः अबाधितेहप्रत्ययत्वाद् इह कुण्डे बदराणीति प्रत्यय||वदित्यनुमानेन लाघवतर्कसनाथेन एक एव सिध्यति । एकेनैव सर्वत्र व्यवहारोपपत्तौ तदनेकत्वकल्पनायां गौरवाद् ¶ इति समवायैकत्वसिद्धिः** ॥

**अभावस्तु प्रागभावप्रध्वंसाभावाऽन्योन्याभावाऽत्यन्ताभावलक्षणश्चतुर्विधः ॥**

अभावं विभजते अभावस्त्विति । इह पटो भविष्यतीत्यत्र प्रागभावः प्रतीयते । स नष्ट इति प्रध्वंसः । घटः पटो न भवतीत्यन्योन्याभावः । (अभावनिरूपकः) †† प्रतियोगिसमवायि‡‡व्यतिरिक्तस्थले इह घटो नास्तीत्यादिनिषेधस्त्रैकालिको ऽत्यन्ताभावः ॥

**पृथिवी नित्या ऽनित्या च । परमाणुलक्षणा§§ नित्या । कार्य्यलक्षणा|||| त्वनित्या । सा ऽपि शरीरेन्द्रियविषयरूपा । शरीरमस्मदादीनां प्रत्यक्षसिद्धम् । इन्द्रियं गन्धव्यञ्जकम् । विषयो घटादिः ¶¶ ॥**

---

* विशेषपदार्थं विनेति २ पु॰ पा॰ । † व्यावृत्तिबुद्धेरिति १ पु॰ पा॰ ।
‡ परमाणुवृत्तिजातेरिति २ पु॰ पा॰ । § वर्तते इति २ पु॰ पा॰ ।
|| बदरवदिति १ पु॰ पा॰ । ¶ तदनेकत्वकल्पनायां कल्पनागौरवप्रसङ्गादिति २ पु॰ पा॰ ।
** इति समवायस्यैकत्वसिद्धिरितीति २ पु॰ पा॰ ।
†† ( ) एतन्मध्यस्थो ग्रन्थः २ पु॰ नास्ति । ‡‡ प्रतियोगिसमवायेति २ पु॰ पा॰ ।
§§ परमाणुरूपेति २–३ पु॰ पा॰ । |||| कार्यरूपेति २–३ पु॰ पा॰ । ¶¶ घटादिरिति १ पु॰ पा॰ ।

संप्रति पृथिवीं पृथक्करोति पृथिवीति । परमाणुसद्भावे प्रमाणं त्रसरेणुः सावयवावयवारब्धः जन्यमहत्त्वाधिकरणत्वाद् घटवदिति त्रसरेणोरवयवे सावयवे सति यो ऽवयवः स एव परमाणुः * । सोऽपि चेदनित्यः स्यात्तस्यापि हेतुपरम्परा ऽनुसारेण अनवस्था स्यात् । तथा चानवधिकमनेका ऽवयवारब्धं सर्वं कार्यं कल्प्यमिति † मशकमातङ्गयोरपि तुल्यपरिमाणत्वापत्तिः । तस्मात्सर्वकार्यद्रव्यावधित्वेन नित्यः परमाणुः सिध्यतीति ‡ नित्यपृथ्वीसिद्धिः§ ( द्व्यणुकमप्यनेनैव सिध्यति )‖ एवमग्रे ऽपि परमाणुसाधनप्रमाणं ¶ द्रष्टव्यम् । अनित्यायास्त्रैविध्यमाह सा ऽपीति । शरीरमिन्द्रियं विषयश्च रूपं** यस्याः सा । पार्थिवशरीरादित्रय††सिद्धौ प्रमाणमाह शरीरमिति । गन्धव्यञ्जकपदेन घ्राणस्य पार्थिवत्वे प्रमाणं सूचितम् ‡‡ । घ्राणं पार्थिवं रूपादिषु पञ्चसु मध्ये गन्धस्यैवाभिव्यञ्जकत्वाद् §§ वायूपनीतसुरभिचम्पकभागवत् । इति घ्राणस्य पार्थिवत्वं सिद्धम् ॥

**आपो नित्या अनित्याश्च ‖‖ । परमाणुलक्षणा नित्याः । कार्य्यलक्षणास्त्वनित्याः । ता अपि शरीरेन्द्रियविषयरूपाः । शरीरं वरुणलोके । इन्द्रियं रसव्यञ्जकम् । विषयः सरित्समुद्रादिः ॥**

अपो विभागं प्रापयति आपो ऽपीति । वरुणलोके इति । आगमसिद्धे इति शेषः । रसव्यञ्जकमिति रसनेन्द्रियस्याप्यत्वे मानम् ¶¶ । रसनेन्द्रियमाप्यं रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वाल्लालावद् इति प्रयोगः*** ।

**तेजो ऽपि नित्यमनित्यं च । परमाणुलक्षणं नित्यम् । कार्य्यलक्षणमनित्यम् । तदपि शरीरेन्द्रिय-**

---

* त्र्यणुकस्य अवयवे द्व्यणुके सावयवे सति स एवावयवः परमाणुरिति १ पु· पा· ।

† कार्यं तुल्यमितीति २ पु· पा· ।

‡ सिद्धइति २ पु· पा· ।

§ नित्या पृथ्वी सिध्यतीति २ पु· पा· ।

‖ ( ) एतन्मध्यस्थो ग्रन्थः २ पु· नास्ति ।

¶ प्रमाणमिति २ पु· नास्ति ।

** रूपं स्वरूपमिति २ पु· पा· ।

†† त्रयेति २ पु· नास्ति ।

‡‡ पदेन प्रमाणं सूचितमिति १ पु· पा· ।

§§ अभिव्यञ्जकद्रव्यत्वादिति १ पु· पा· । एवमग्रे ऽपि ।

‖‖ आपो ऽपि परमाणुलक्षणाः कार्यलक्षणाश्चेति ३ पु· पा· ।

¶¶ रसव्यञ्जकमनेन प्रमाणमसूचि रसनेन्द्रियस्याप्यत्वे इति २ पु· पा· ।

*** प्रयोग इति नास्ति २ पु· ।

**विषयरूपम् । शरीरमादित्यलोके । इन्द्रियं रूपव्यञ्जकम् । विषयो भौमदिव्यौदर्य्याऽऽकरजरूपः* ।**

तेजो विभजते तेजोपीति । अत्राप्यादित्यलोके इत्यनन्तरं पुराणादिप्रसिद्धे इति शेषः । इन्द्रियमिति† । चक्षुः तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वाद् आलोकवदिति । मनोव्यावृत्त्यर्थमेवकारः । असिद्धिवारणाय रूपादिष्विति । अन्यथा रूपत्वस्याभिव्यञ्जकत्वादसिद्धिः स्यात् । विषयस्य चातुर्विध्यमाह विषय इति ॥

नन्वाकरजं सुवर्णं‡ पार्थिवं नैमित्तिकद्रवत्वाधिकरणत्वाद् लाक्षावदिति पीतिमगुरुत्वाधिकरणत्वात् पीतपटवदिति वा सुवर्णस्य पार्थिवत्वसिद्धौ कथं तैजसत्वमिति चेद् मैवम् । तस्य पार्थिवत्वे अत्यन्तानलसंयोगे सति द्रवत्वविनाशापत्तेः । द्रवपार्थिवत्वेन§ घृतवद्दामानलेन्धनत्वापत्तेश्चेति बाधकतर्कपराहतमनुमानम् । तैजसत्वे त्वेतत्तर्कसहकृतमनुमानम् । सुवर्णम् अपार्थिवम् असति विरोधिद्रवद्रव्यसम्बन्धे अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वाद् आप्यपरमाणुवद् इति पार्थिवव्यतिरेक‖सिद्धौ नैमित्तिकद्रवत्वेन जलव्यतिरेकसिद्धौ रूपवत्त्वेन परिशेषात्तैजसत्वसिद्धिः ॥

**वायुरपि नित्योऽनित्यश्च । परमाणुलक्षणो नित्यः । कार्यलक्षणोऽनित्यः । कार्यरूपः शरीरेन्द्रियविषयप्राणलक्षणः¶ । शरीरं वायुलोके । इन्द्रियं स्पर्शव्यञ्जकम् । विषयो वृक्षादिकम्पजनकः । प्राणस्तु शरीराभ्यन्तरचारी वायुः** । स एव क्रियाभेदादपानादिसंज्ञां लभते । स्तिमितवायुस्तु†† परमाणुसमूह एवाऽनारब्धद्रव्यः ॥**

---

* आकरजरूपश्चतुर्विध इति २ पु· पा· । आकरज इति २ पु· पा· ।

† रूपव्यञ्जकमित्यनेन चक्षुषस्तैजसत्वे प्रमाणमसूचीति २ पु· अधिकम् ।

‡ तच्चेति १ पु· अधिकम् ।

§ द्रवत्वपार्थिवत्वेनेति २ पु· पा· ।

‖ पृथिवीव्यतिरेकेति २ पु· पा· ।

¶ स च शरीरेन्द्रियविषयप्राणलक्षणश्चतुर्विध इति ३ पु· पा· ।

** वायुशब्दो नास्ति २ पु· ।

†† तुशब्दवायुशब्दौ न स्तः ३ पु· ।

वायुं विविनक्ति वायुरपीति । इन्द्रियमिति * त्वगिन्द्रियं वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वाद् देहसङ्गिसलिलशैत्याऽभिव्यञ्जकव्यजनवातवदिति त्वगिन्द्रियस्य वायवीयत्वे मानम् । कम्पजनक इत्यनेन वायोरतीन्द्रियत्वात् कम्पस्पर्शशब्दलिङ्ग†गम्यत्वं सूचयामास । प्रयोगस्तु प्रयत्नाद्यभावे सति शाखाकम्पः स्पर्शवद्द्रव्यजन्यः कम्पत्वात् शरीरादिजन्यकम्पवदिति परिशेषाद् वायुः सिध्यति ‡। शरीराभ्यन्तरचारी श्वासोच्छ्वासरूपः । प्राणवदपानादीनामाधिक्यमाशङ्क्याह स एवेति । प्राण एवाऽपानव्यानोदानसमानसंज्ञां लभते इत्यर्थः । ननु स्तिमितो वायुः पञ्चमो ऽस्तीत्यत आह स्तिमित इति । ननु § स्तिमितो वायुः परमाणुसमूहरूप‖ इत्युक्ते ऽपि पञ्चविधकार्यत्वे ऽपि न दोषः । कार्यस्यापि परमाणुरूपत्वसम्भवात् । परमाणूनामेव परम्परया कार्यावयवत्वादत आह अनारब्धद्रव्य इति । अनारब्धं द्रव्यं येन स तथा । यद्यपि स्तिमितवायोः परमाणुरूपत्वेन व्यजनादिव्यापारानन्तरं तदीयस्पर्शो न गृह्येत¶ परमाणुस्पर्शस्याऽतीन्द्रियत्वात् तथापि तदीयस्पर्शानुपलम्भे ऽपि व्यजनादिव्यापाररूपनिमित्तसहकारिलाभात् तदारब्धकार्यस्य स्पर्शोपलम्भाददोषः । तस्मान्नित्यवायावेव तस्यान्तर्भाव इति नाधिकत्वम् ** ॥

**आकाशस्तु घटाकाशादिभेदभिन्नो ऽनन्त एव ॥**
**कालस्तु उत्पत्तिस्थितिविनाशलक्षणस्त्रिविधः ॥**

आकाशस्य स्वत एकत्वेपि औपाधिको विभागो भविष्यती††त्याशङ्क्य तदभावे ‡‡ हेतुमाह घटाकाशादीति । उपाधीनामनन्तत्वेन औपाधिको विभागो न सम्भवतीत्यर्थः । कालस्यौपाधिकं विभागमाह उत्पत्तीति । पदार्थानामुत्पत्तिस्थितिविनाशैर्लक्ष्यतइति उत्पत्तिस्थितिविनाशलक्षणः । उत्पत्त्या भविष्यन् स्थित्या वर्त्तमानः विनाशेन भूतकालो लक्ष्यते§§ इति त्रिविधः ॥

* एतदग्रे स्पर्शव्यञ्जकमित्यनेन त्वगिन्द्रियस्य वायवीयत्वे मानमसूचीति पाठो ऽधिकः २ पु॰ ।

† स्पर्शशब्दधरणधृतिलिङ्गेति १ पु॰ पा॰ ।

‡ परिशेषाद्वायुसिद्धिरिति २ पु॰ पा॰ ।

§ नन्वित्ति २ पु॰ नास्ति ।

‖ रूपशब्दो नास्ति २ पु॰ ।

¶ तदीयस्पर्शग्रहो न इति २ पु॰ पा॰ ।

** नाधिकमिति २ पु॰ पा॰ ।

†† न संभवतीति २ पु॰ पा॰ ।

‡‡ विभागाभावेति २ पु॰ अधिकम् ।

§§ लक्षित इति २ पु॰ पा॰ ।

**दिगैन्द्री आग्नेयी याम्या * नैर्ऋती वारुणी वायवी कौबेरी ऐशानी नागी ब्राह्मी रौद्री चेत्येकादशविधा ॥**

दिशमुपाधिना विभजते दिगिति। सर्वत्र देवतार्थे इदमर्थे वा तद्धितः । टिड्ढाणञित्यादिना ङीप् । अग्नेर्ढग् यमाण्यदिति विशेषः । रौद्री अन्तरिक्षप्रदेशः ॥

**आकाशादित्रयं तु वस्तुत एकमेव उपाधिभेदान्नानाभूतम् ॥**

आकाशादीनां स्वभावतो भेदा†भावे हेतुमाह आकाशादीति । आकाशं तावच्छब्दलिङ्गकं शब्दाश्च सर्वे समानाधाराः । तथा हि । विवादाध्यासिताः शब्दाः श्रूयमाणशब्दाधारसमवेताः शब्दत्वात् श्रूयमाणशब्दवत् । न च श्रूयमाणशब्दत्वमुपाधिः ‡ । श्रूयमाणविशेषणस्य साधनव्याप्तिपरिहारार्थत्वेन पक्षेतरत्वात् § । श्रूयमाणशब्दाधाराऽसमवेत‖संयोगादौ साध्याव्यापकत्वाच्च ¶ ॥

दिक्कालयोरपि परत्वापरत्वानुमेयत्वेन सिद्धौ एकत्वसिद्धिः । तथा हि। तरणिपरिस्पन्दलक्षणाहोराचाद्यल्पबहुत्वाभ्यां विशिष्टे पिण्डे परापरबुद्धिर्जायते तरणिपरिस्पन्दस्य च सूर्यसमवेतत्वेन स्वतः पिण्डसम्बन्धाभावात् । सूर्यस्य च मूर्तत्वेनाश्रयद्वारा ऽपि सम्बन्धाभावात्। न च पृथिव्यादीनां तत्सम्बन्धघटकता । मूर्तत्वात् । आत्माकाशयोश्च विशेषगुणवत्त्वेन घटादिवत्तदघटकत्वात्** । ततस्तरणिपरिस्पन्दपिण्डसम्बन्धघटकतया सिद्धं यद् व्यापकं द्रव्यं†† स एव कालः । पिण्डस्य तरणिपरिस्पन्देन संयुक्तसमवायलक्षणः सम्बन्धः ॥

दिगप्यनियतपरत्वापरत्वाभ्यां प्रमातृविप्रकृष्टसंनिकृष्टदेशवर्त्तिपिण्डसमवेताभ्यामनुमीयते । तथा हि । कालस्य ज्येष्ठकनिष्ठत्वादिनियतपरापर-

---

* यामीति २ पु॰ ।
† स्वभावभेदेति १ पु॰ पा॰ ।
‡ श्रूयमाणशब्दत्वमुपाधिर्न चेति २ पु॰ पा॰ ।
§ पक्षेतरसमत्वादिति पाठो युक्त इति कैलासचन्द्रभट्टाचार्यः ।
‖ शब्दाधारसमवेतत्वे इति २ पु॰ पा॰ ।
¶ साधनव्यापकत्वाच्चेति २ पु॰ पा॰ ।
** तदघटकत्वादिति २ पु॰ पा॰ ।
†† सिद्धं यद् द्रव्यं व्यापकमिति २ पु॰ पा॰ ।

बुद्धिहेतुत्वेन सिद्धस्याऽनियतपरापरबुद्धिहेतुत्वाऽसम्भवात् । तस्मात्साधकत्वेन सिद्धं यद् द्रव्यं सा दिक् । दिक्कालयोश्चैकत्वेनैव व्यवहारोपपत्तौ (कल्पनाभेदेन वा व्यवहारभेदेन वा)* अनेकत्वकल्पनायां प्रमाणाभावात् ॥

**आत्मा तु परमात्मा क्षेत्रज्ञश्चेति द्विविधः । परमात्मा ईश्वर एक एव । क्षेत्रज्ञा† अस्मदादयोऽनन्ता एव ॥**

आत्मपदार्थं विभजते आत्मा त्विति । नन्वष्टद्रव्यातिरिक्त आत्मा पदार्थ‡ एव नास्तीति कथमयं§ विभागः । तथा हि । कायाकारपरिणतं पृथिव्यादिचतुष्टयमेवात्मपदार्थः । तत्रैव चैतन्यम् ।

ननु यदि भूतेषु चैतन्यं तर्हि घटादेरपि चेतनत्वापत्तिरिति चेद् मैवं भाषिष्ठाः । मदशक्तिवदविरोधात् । यथा क्रमुकफलपर्णचूर्णेषु प्रत्येकं मदजनकत्वाभावे ऽपि समुदाये तज्जनकत्वं पश्यामः तथा घटाद्याकारे तदभावे ऽपि शरीराकारपरिणते भूतचतुष्टये चैतन्योपपत्तेः । प्रमाणं च अहं स्थूलः कृष्णो गौर इति शरीरसमानाधिकरणं प्रत्यक्षमेव । ततः पृथिव्यादिष्वन्तर्भावाद् आत्मपदार्थस्यातिरिक्तविभागो न युक्त इति‖ । तदसारम् । शरीरात्मत्वे बाल्ये दृष्टं कौमारादौ न स्मरेत् । बाल्यकौमारादिशरीराणां यावद्द्रव्यभाविपरिमाणभेदेन भेदात् । अन्यानुभूतस्य अन्येनाऽस्मरणात् । न हि चैत्रेणाऽनुभूतं मैत्रः स्मरति । तदुक्तमुदयनाचार्यैः ।

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे¶ ॥ इति ।

अपक्रमो विनाशः । वासना संस्कारः । किं च शरीरं नात्मा रूपादिमत्त्वाद् घटवत् । न चाचेतनत्वमुपाधिः । रूपादिमत्त्वेनैव शरीरस्याप्यचेतनत्वेनोपाधेः साधनव्यापकत्वात् । हेतावनुकूलतर्कस्तूक्त एव । बाल्ये

---

* ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु० । † क्षेत्रज्ञास्तु इति तुशब्दो ऽधिकः ३ पु० ।
‡ आत्मपदार्थ इति समस्तः पाठः २ पु० । § नास्ति कथं तर्ह्ययमिति २ पु० पा० ।
‖ इति चेदिति २ पु० पा० ।
¶ न्यायकुसुमाञ्जलौ १ स्तबके १५ श्लोकः । गत्यन्तरं स्थितमिति १ पुस्तके मूलग्रन्थविरुद्धः पाठः ।

दृष्टमित्यादिना। समानाधिकरणप्रत्ययश्च भ्रान्तः। यौक्तिकस्य बाधस्य सद्भावात् *। मम शरीरमिति भेदप्रत्ययाच्च †। तस्मान्न शरीरमात्मा। तथाप्यतिरिक्तात्मसद्भावे किं मानमिति चेद् ‡ एकस्तावदुक्त एव परिशेषः। अपरं चाऽनुमानम्। इच्छा क्व चिदाश्रिता गुणत्वाद्रूपवत्। इच्छा गुणः विशेषगुण इति वा अनित्यत्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपवदिति। जन्येच्छायाः पक्षीकृतत्वान्नेश्वरेच्छायां भागासिद्धिः। आत्मनो नित्यत्वात् प्रमायाश्च गुणत्वान्न व्यभिचारः। द्रव्यत्वे चाऽचाक्षुषप्रत्यक्षविषयत्वादिति विशेष्यं कर्तव्यम्। तदा रसवदिति दृष्टान्तो विधेयः। सा तु § न भूतपञ्चकगुणो नापि दिक्कालमनसाम्। मनसैव ग्राह्यत्वाद् विशेषगुणत्वाद्वेत्युत्तरत्रैव हेतुः। एव मितरबाधसहकृतेन‖ (सामान्यतोदृष्टेन व्यतिरिक्तात्मसिद्धिः। यदितरबाधकप्रदर्शनानन्तरम्) ¶। इच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति गुणत्वाद्यन्नैवं तन्नैवं यथा रूपादि इति व्यतिरेकेणात्मसिद्धिरिति युक्त एव तस्य विभागः। क्षेत्रज्ञानां विभागाकरणे हेतुमाह अनन्ता एवेति॥

## मनस्तु प्रत्यात्मनिष्ठत्वादनन्तम्** ।

मनसो विभागाकरणे हेतुमाह प्रत्यात्मेति। आत्मनः प्रतिशरीरं भिन्नत्वेनानन्तत्वात्तन्निष्ठं मनो ऽप्यनन्तम् इत्यर्थः।

ननु मनसः स्पर्शरहितद्रव्यत्वेन†† विभुत्वात्कथमात्मनिष्ठत्वमिति चेन्न। युगपद् ज्ञानानुपपत्तिलक्षणधर्मिग्राहकमानेनाणुत्वस्यैव सिद्धेः॥

## आकाशादिपञ्चकं नित्यमेव। अपरं नित्यानित्यं च ‡‡॥

नवानामप्यपरं विभागमाह आकाशादीति। नित्यानित्यमिति। परमाणुकार्यभेदादित्यर्थः§§॥

---

* यौक्तिकबाधकसद्भावादिति २ पु॰ पा॰। † प्रत्ययत्वाच्चेति २ पु॰ पा॰।
‡ इति चेच्छृणु इति २ पु॰ पा॰। § तुशब्दो नास्ति २ पु॰।
‖ सहकृतमनुमानमिति २ पु॰ पा॰। ¶ ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰।
** प्रत्यात्मनि नित्यरूपमिति १ पु॰ पा॰।
†† मनसो द्रव्यत्वे सदा स्पर्शरहितत्वेनेति २ पु॰ पा॰।
‡‡ नित्याऽनित्यरूपमिति ३ पु॰ पा॰। §§ इत्यर्थ इति नास्ति २ पु॰।

**रूपं सितलोहितपीतकृष्णहरितकपिश*चित्रभेदात्सप्तविधम् ॥**

रूपादीनामवान्तरविभागं दर्शयति रूपमिति । सितादीनामाश्रयव्याप्यवृत्तित्वेना†ऽव्याप्यवृत्तित्वाऽयोगात् चित्रः पट इत्याद्यनुभवाच्च सप्तमं रूपमास्थेयमिति मत्वा ऽऽह चित्रभेदादिति । तत्रापि जले शुक्लमेव रूपं शुक्लभास्वरमेव तेजसि इतराणि तु भूमावेव पाकजानि च ॥

**रसो ऽपि‡ मधुरतिक्तकटुकषायाऽम्ललवणचित्रभेदात्सप्तविधः ॥**

रसो ऽपीति । मधुरः शर्करादौ । तिक्तो निम्बादौ । कटुर्मरिचादौ§ । कषाय आमलक्यादौ । लवणः प्रसिद्धः । षड्रसा हरीतकीति । चित्ररसानुभवमवलम्ब्याह चित्रभेदादिति । तत्रापि जले मधुर एव रसो हरीतक्या ऽभिव्यङ्ग्यो ऽपाकजः । इतरे तु भूमावेव पाकजाश्च ॥

**गन्धो ऽपि द्विविधः । सुरभिरसुरभिश्चेति । स्पर्शस्तु शीतोष्णाऽनुष्णाशीतभेदात्त्रिविधः । संख्या एकत्वद्वित्वबहुत्वभेदात् त्रिविधा । पृथक्त्वमेकानेकवृत्ति । संयोगो ऽपि द्विविधः कर्मजः संयोगजश्चेति । परिमाणम् अणुमहद्दीर्घह्रस्वभेदाद् विविधम् । विभागो ऽपि द्विविधः कर्मजो विभागजश्च । परत्वं कालकृतं दिक्कृतं च । अपरत्वमपि दिक्कृतं कालकृतं च‖ ॥**

गन्धो ऽपीति । सुरभिश्चन्दनादौ । असुरभिर्मद्यादौ । स्पर्शस्त्विति¶ । शीतः स्पर्शो जले** । उष्णस्तेजसि । अनुष्णाशीतो वायौ भूमौ च । स एव पाकजः । परिमाणमिति†† । अणुत्वं ह्रस्वत्वं च परमाणुद्व्यणुकयोः । महद्दीर्घत्वे आ-

---

* कपिलेति ३ पुस्तकपाठः । एवं रूपं तु इति तुशब्दो ऽधिको ऽत्र पुस्तके ।

† व्याप्यवृत्तिजातित्वेनेति २ पु॰ पा॰ । ‡ रसस्तु इति पा॰ ।

§ मरीच्यादाविति २ पु॰ पा॰ । ‖ अपरत्वमपि कालकृतं दिक्कृतं चेति पु॰ नास्ति ।

¶ इदं प्रतीकं १ पु॰ नास्ति । ** शीतः पयसीति २ पु॰ पा॰ ।

†† इदमपि प्रतीकं १ पु॰ नास्ति ।

काशघटादौ । कुवलयामलक्यादौ अणुह्रस्वादिव्यवहारो गौणः । पृथक्त्वमिति । अनेकवृत्ति द्विबहु*पृथक्त्वादि । (संयोगो द्विविधः । कर्मजः संयोगजश्च । तत्रापि कर्मजो द्विविधः । अन्यतरकर्मज उभयकर्मजश्च) † । संयोगेति । स्थाणुश्येनयोरन्यतरकर्मजः । मल्लयोर्मेषयोर्वा उभयकर्मजः । तन्तुकेशसंयोगात्पटकेशसंयोगो न (तथा हि पटारम्भकतन्तुकेशसंयोगः कर्मजः । तन्तुकेशसंयोगात्पटकेशसंयोगः । ततः पटोत्पत्तौ केशपटसंयोगो न) ‡ कर्मजः । उभयत्रान्यत्र वा कर्माभावात् । किं तु तन्तुकेशसंयोग एव हेतुः । विभागोऽपि संयोगवद्वेदोन्नेयः । वृद्धतरुणयोः परत्वापरत्वे कालकृते । संनिकृष्टेऽपरत्वं विप्रकृष्टे परत्वं च दिक्कृतम् । तयोर्दिक्कालजन्यत्वं पुरस्तादेव प्रासाधि § ॥

**बुद्धिरपि स्मृतिरनुभवश्च ॥ अनुभवोऽपि द्विविधः‖ । प्रमाऽप्रमा च । अप्रमाऽपि संशयो विपर्ययश्च । प्रमा प्रत्यक्षमनुमितिश्च । प्रत्यक्षं सप्तप्रकारम् । तच्चेश्वरघ्राणरसनचक्षुस्त्वक्छ्रोत्रमनोलक्षणम् ॥**

बुद्धिभेदानाह बुद्धिरपीति । प्रमानिरूप्यत्वात् परस्ताद्विभक्तामप्यप्रमां सूचीकटाहन्यायेन प्राग् विभजते अप्रमापीति ।

ननु सर्वज्ञानानां यथार्थत्वात्संशयविपर्ययाभावात्कथं तद्विभाग इति प्रभाकरः । मानं च ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात् प्रमात्ववत् । यथार्थत्वं च तद्वति तत्प्रकारकज्ञानत्वम् । तच्छब्देन ज्ञानविषयवृत्तिघटत्वादिकमुच्यते । ते न घटत्ववति घटे घटाकारज्ञानं यथार्थ¶मित्यर्थः । भ्रमे तु नैवम् । पुरोवर्तिनि शुक्तिकाशकले रजतत्वस्याऽभावेन रजतत्ववति रजतत्वप्रकारकत्वाऽभावात् । किं तु रजतत्वाभाववति शुक्तिकाशकले रजतत्वप्रकारकत्वम् । ततो यथार्थत्वलक्षणं भवदभ्युपेतं भ्रमं न व्याप्नोति । हेतौ तु प्रमेयत्वादिवारणाय मात्रपदम् । तस्मादयुक्तो विभाग इति चेद् उच्यते । प्रत्यक्षविरुद्धं तावदनुमानम् । अहमत्र संशये ममात्र संशयः समजनीति

---

* बहुशब्दो नास्ति २ पु· ।    † ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु· ।

‡ ( ) एतन्मध्यगतो ग्रन्थः २ पु· नास्ति । § दिक्कृतयोः कालादिजन्यत्वं च पुरस्तादेव वक्ष्यतीति २ पु· पा· ।    ‖ द्विविध इति नास्ति ३ पु· ।

¶ ज्ञानत्वं यथार्थत्वमिति २ पु· पा· ।

संशयानुभवात् । तथा शुक्तिकामिमामहमेतावन्तं कालं रजतमित्यज्ञासिषमिति विपर्ययाऽनुभवात् । तथा च कालात्ययापदिष्टम् * । तथाऽप्ययथार्थसद्भावे किं प्रमाणम् इति चेद् एकं तावद्दर्शितमेव प्रत्यक्षम् । अपरं तावदनुमानम् । ज्ञानत्वम् अयथार्थवृत्ति सकलज्ञानवृत्तित्वात् सत्तावत् । न च साध्यवैकल्यम् । अयथार्थव्यवहारे गुरुमते सत्तासद्भावेन संप्रतिपन्नत्वात्साध्यस्य । न चानुभवत्वादौ व्यभिचारः । तेषां सकलज्ञानवृत्तित्वाभावात् । न च ज्ञानान्यवृत्तित्वमुपाधिः । स्मृतेरयथार्थाया अपि सद्भावेन स्मृतित्वस्यायथार्थवृत्तित्वे ऽपि ज्ञानान्यावृत्तित्वेन† साध्याव्यापकत्वात् । तस्मादयथार्थज्ञानसत्त्वाद्युक्तो ऽयमप्रमाविभागः । प्रमां विभजते प्रमेति । सप्तविधत्वं चेश्वरादिभेदेनेति वक्ष्यति ॥

**अनुमितिरपि त्रिविधा । लिङ्गस्य‡ त्रैविध्यात् । केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि चेति । तदपि स्वार्थं परार्थं च ॥**

लिङ्गस्य त्रैविध्यमाह केवलान्वयीति । क्रमेणोदाहरणानि । शब्दो ऽभिधेयः प्रमेयत्वाद् घटवत् । जीवच्छरीरं सात्मकं प्राणादिमत्त्वान्न यदेवं न तदेवं यथा पाषाण इति । शब्दो ऽनित्यः कार्यत्वाद् यदनित्यं न भवति तत्कार्यमपि न भवति यथा गगनमिति । त्रिविधस्यापि द्वैविध्यमाह तदपीति । यत्र स्वयमेव लिङ्गिनं जानाति§ तत्स्वार्थम् । यत्र स्वयं निश्चित्य परबोधनाय पञ्चावयववाक्यप्रयोगः तत्परार्थम् ॥

**परार्थाङ्गानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । उभयाङ्गानि पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति ॥**

पञ्चावयवानाह परार्थाङ्गानीति । क्रमेणोदाहरणानि । पर्वतो ऽयं वह्निमान् धूमवत्त्वाद् महानसवत् । तथा चायं धूमवान् तस्माद्वह्निमाने-

---

* कालात्ययापदिष्टानुमानम् इति २ पु॰ पा॰ । † ज्ञानान्यवृत्तित्वाभावेनेति २ पु॰ पा॰ ।
‡ लिङ्गस्यैवेति २ पु॰ पा॰ । § स्वयमेव लिङ्गं दृष्ट्वा लिङ्गिनं जानातीति २ पु॰ पा॰ ।

वेति* । स्वार्थपरार्थाङ्गान्याहोभयाङ्गानीति । पक्षे† वर्तमानत्वं पक्षधर्मत्वम् । सपक्षे व्यापकदेशे वा सत्त्वं सपक्षे सत्त्वम् । विपक्षे सर्वस्मिन्नवर्तमानत्वं विपक्षाद्व्यावृत्तिः । पक्षे साध्यस्य प्रमाणान्तरेण बाधविरहोऽबाधितविषयत्वम् । असन् प्रतिपक्षो यस्य तस्य भावस्तत्त्वं साध्याभावसाधकप्रत्यनुमानरहितत्वमिति‡ यावत् ॥

**तदाभासा असिद्धविरुद्धाऽनैकान्तिकाऽनध्यवसितकालात्ययापदिष्टप्रकरणसमाः ॥**

अनुमानशोधनायाह तदाभासा इति । व्याप्तिपक्षधर्मताविशिष्टो हेतुः सिद्धः । तद्रहितोऽसिद्धः । स च पक्षाभावादाश्रयासिद्धः । पक्षधर्मताभावात्स्वरूपासिद्धः । व्याप्त्यभावाद्व्याप्यत्वासिद्धः । इति त्रिविधः । क्रमेणोदाहरणानि§ । गगनारविन्दं सुरभि अरविन्दत्वात्सरोजारविन्दवत् । अनित्यः शब्दः चाक्षुषत्वात् । विवादास्पदं|| विमतं सर्वं क्षणिकं प्रमेयत्वादिति । साध्यसाधनाय प्रयुक्तो हेतुर्यदि तद्विपरीतं साधयति तदा विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । अम गतौ¶ वित्यस्मान्निष्पन्नोऽन्तशब्दो निश्चयवाची । एकेन साध्यरूपेणान्तः सहचारनिश्चयो न विद्यते यस्यासौ अनैकान्तिकः । स च द्विविधः । यथा नित्यः शब्दः प्रमेयत्वादिति साधारणोऽनैकान्तिकः । नित्या पृथ्वी गन्धवत्त्वादित्यसाधारणोऽनैकान्तिकः । सकलसपक्षविपक्षव्यावृत्तत्वात्** । सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारी । व्याप्त्युपसंहाराभावात्†† । तत्र षड्ढेत्वाभासपक्षेऽसाधारण एवानध्यवसितशब्देनोच्यते । साध्याऽध्यवसानाय‡‡ नालमित्यनध्यवसितः । स च षड्ढेत्वाभासानभ्युपगच्छता आचार्येण पृथगुक्तः । उदाहरणं तु पृथ्वी नित्या गन्धवत्त्वात् । अत्र सपक्षादाकाशादेर्विपक्षाज्जलादेर्व्यावृत्तत्वेन साध्यस्य निश्चेतुमशक्यत्वादनध्यवसित इत्युच्यते । कालस्य§§

---

* तथा चायं धूमवान् पर्वतस्तस्माद्धूमवत्त्वाद्वह्निमानेवेति २ पु· पा· ।

† पक्षे व्याप्येति १ पु· पा· । ‡ प्रत्यनुमानमिति २ पु· ।

§ क्रमेणोदाहरतीति २ पु· पा· । || विवादास्पदमिति २ पु· नास्ति ।

¶ पुस्तकद्वये ऽप्यमु गताविति पाठदर्शनेऽपि धातुपाठे अम गत्यादिष्विति दर्शनादुपरि तदनुसार्येव पाठो धृतः । ** सकलपक्षव्यावृत्तत्वादिति २ पु· पा· ।

†† उपसंहारस्थलाऽभावादिति २ पु· पा· ।

‡‡ साध्याध्यवसानाय निश्चयायेति २ पु· पा· । §§ अनुमानस्य कालस्येति १ पु· पा· ।

अत्यये ऽपदिष्टो* निर्दिष्टः कालात्ययापदिष्टः । यथा ऽनुष्णं तेजो वस्तुत्वाज्जलवत् । इति प्रयोगे वस्तुत्वानुष्णत्वयोर्व्याप्तिग्रहणसमये एव प्रत्यक्षेणानुष्णत्वप्रतियोगितयोष्णत्वं क्व चिदवधारणीयम् । प्रतियोगिनिरूपणं विना अभावनिरूपणासम्भवात् । ततो बलवता व्याप्तिग्रहणेनैव प्रत्यक्षेण ( तेजस्युष्णत्वमवधारितं तस्याऽन्यनिष्ठत्वाभावात् । तथा च प्रत्यक्षेण )† विपरीतत्वनिश्चये सति तद्विरोधेनानुमानकालस्य अत्यये प्रयुक्तत्वादस्य कालात्ययापदिष्टत्वम् ।

नन्वयमाश्रयासिद्ध एव । तेजसः साध्याभाववत्त्वेन निश्चितत्वात् संदिग्धसाध्यान्वितपक्षत्वान्वयासम्भवात् पक्षस्यैव विपक्षत्वेनानैकान्तिक एव । अतो ऽयं न बाधितापरपर्यायः कालात्ययापदिष्ट इति चेत्सत्यम् । तथापि पक्षे साध्याभावप्रमामन्तरेण असिद्ध्यादेरनवगमात् साध्याभावप्रमारूपबाधस्योपजीव्यत्वात्पृथक्त्वम् ।

तथाप्यसंकीर्णोदाहरणं किमिति चेत् श्रूयताम् । अयं पर्वतो वह्निमान् धूमवत्त्वादित्येतावदनुमानम् । अत्र महानसीयादिर्वह्निः पर्वते बाधादेव न सिध्यति । असिद्ध्यादेस्तत्राभावात् । अतो ऽन्यदीयो वह्निरन्यत्र साध्यमानः कालात्ययापदिष्टत्वादेव न सिध्यति । बाधकालात्ययापदिष्टत्वयोरपरपर्यायतैव । साध्याभाववत्तया प्रमिते पक्षे उभयोः प्रयोगात् । प्रकरणयोः प्रकृतयोः‡ समः प्रकरणसमः । साध्यविरोधित्वेन तदभावस्यापि प्रकृतत्वात्§ । उदाहरणं तु अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् । नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात्सपक्षवदिति|| ॥

## तर्कस्वप्नौ संशयविपर्य्ययावेव ॥

ननु व्याप्यारोपे व्यापकारोपस्तर्कः । यथा धूमानुमाने धूमो ऽस्तु वह्निर्मास्तु । वह्न्यभावस्य व्याप्यस्य प्रतिवादिना आरोपे कृते सति यद्यनग्निः स्यात् तर्हि निर्धूमो ऽपि स्यादिति धूमाभावस्य व्यापकस्यारोपः । स किमिति नोद्दिष्टः । तथा स्वप्नो नाम निद्रादुष्टमनोजन्यज्ञानं स च कुतो नोद्दिष्ट इत्यत आह तर्केति । तर्कस्तावत् संशय एव । यद्यनग्निस्तर्हि

* अत्यये ऽपगमे ऽपदिष्ट इति २ पु॰ पा॰ । † ( ) एतन्मध्यस्थो ग्रन्थस्त्रुटितः २ पु॰ ।
‡ साध्यतदभावयोरित्येतदग्रे ऽधिकं १ पु॰ । § प्रयोगादिति १ पु॰ पा॰ ।
|| सपक्षवदिति २ पु॰ नास्ति ।

निर्धूम इत्यत्र यद्यालिङ्गितत्वेनाग्निमत्त्वे धूमवत्त्वं सम्भवतीत्यपि प्रतीयते । अतोऽस्तित्वनास्तित्वकोटिद्वयविषयत्वस्य स्पष्टत्वात् । (यद्वा दृश्यते च धूमः तस्मादग्निरस्त्येवेति विपर्ययपर्यवसानात् तर्कः । तत्र न स्यादस्ति चेति कोटिद्वयविषयत्वात् ।)* स्वप्नस्तु† गगनलक्षणाद्यविद्यमानं विद्यमानत्वेनासंनिहितं गजादि संनिहितत्वेन दर्शयन्‡ विपर्यय एव । तल्लक्षणाक्रान्तत्वात् ॥

## सविकल्पकनिर्विकल्पकयोस्तु प्रमायामप्रमायां चान्तर्भावः ॥

नन्वयं घट इति विशिष्टं ज्ञानं§ सविकल्पकं प्रथमाक्ष‖संनिपातजं ज्ञानं निर्विकल्पकम् । एतद् द्वयं किमिति नोद्दिष्टमित्यत आह सविकल्पकेति । रजते एवेदं रजतमिति सविकल्पकं प्रमा । अरजते रजतज्ञानं भ्रम इत्यर्थः । निर्विकल्पकं तु प्रमायामेवान्तर्भवति । तस्य प्रथमाक्षसंनिपातजस्य वस्तुस्वरूपमात्रविषयस्य क्वाप्यबाधात् । सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति न्यायात् । निर्विकल्पकस्य च प्रकाराऽभावात् ॥

## एवं प्रत्यभिज्ञाहानोपादानोपेक्षाज्ञानानामपि ॥

ननु सोऽयं देवदत्त इत्यतीतवर्तमानकाल¶विशिष्टविषयकं ज्ञानं** प्रत्यभिज्ञा†† । इष्टे वस्तुनि विषये‡‡ इदं ग्राह्यमिति ज्ञानमुपादानबुद्धिः । अनिष्टे त्याज्यमिति हेयबुद्धिः । तदुभयरहिते उपेक्षाबुद्धिः । एतच्चतुष्टयं कुतो नोद्दिष्टमित्यत आह एवमिति । प्रमायाम् अप्रमायां चान्तर्भाव इत्येवंशब्दार्थः । (अप्येवमित्यन्वयः)§§ । बाधितायामप्रमायामबाधितायां प्रमायामिति विभागः ॥

## ऊहानध्यवसाययोस्तु संशये एव ॥

ननु तथापि बाह्यालीप्रदेशे पुरुषेणानेन भवितव्यम् इत्यूहज्ञानम् । किंसंज्ञकोऽयं वृक्ष‖‖ इत्यनध्यवसायज्ञानम् । अनयोः कुतो नोद्देश इत्यत

---

* ( ) एतन्मध्यगतो ग्रन्थः २ पु॰ नास्ति । † स्वप्ने तु इति २ पु॰ पा॰ ।
‡ दर्शनादिति २ पु॰ पा॰ । § विशिष्टज्ञानमिति समस्तः पाठः २ पु॰ ।
‖ पुस्तकद्वये ऽप्यक्षीति पाठः परमक्षेति पाठो युक्तो भातीति तथैवोपरि निवेशितः ।
¶ वर्तमानदेशकालेति १ पुस्तके दृश्यते ।
** ज्ञानमिति नास्ति २ पु॰ । †† प्रत्यभिज्ञानमिति १ पु॰ पा॰ । ‡‡ इष्टवस्तुविषये इति २ पु॰ पा॰ ।
§§ ( ) एतन्मध्यगो ग्रन्थः कुण्डलितः २ पु॰ । ‖‖ वृक्ष इति २ पु॰ नास्ति ।

आह (ऊहेति) * । अन्तर्भाव इति शेषः । (ऊहस्य पुरुषेण भवितव्यमित्यत्र न भवितव्यमिति)† स्फुरतीति संशयत्वं वक्तव्यमेव । किंसंज्ञकोयमित्यत्रापि चूतः पनसो वेति विकल्पस्फुरणा‡दनध्यवसायो ऽपि संशय एवेत्यर्थः ॥

ननु तर्कादीनां यदि संशये ऽन्तर्भावस्तर्हि तल्लक्षणेनैव तेषां लक्षितत्वाद् न पृथग्लक्षणाभिधानं युक्तम् । अन्तर्भावणीयतर्कादिज्ञानाय तल्लक्षणमिति चेद् § ऊहादेरपि तद्वाच्यं नार्धजरतीयन्यायो‖ युक्त इति चेद् न । ऊहादेरति¶ स्पष्टत्वेन लक्षणानभिधानात् । तद्विपरीतत्वेन तेषां तदभिधानादिति ॥

**सुखं** सांसारिकं स्वर्गश्च । दुःखमपि दुःखकारणमात्रप्रभवम् । (इच्छा ऽपि द्विविधा । साध्यविषया साधनविषया च । द्वेषोपि साध्यविषयः साधनविषयश्च)†† प्रयत्नो ऽपि विहितनिषिद्धोदासीनविषयः ॥**

क्रमप्राप्तं सुखं विभजते सुखमिति । ऐहिकं पारलौकिकं चेति द्विविधमित्यर्थः । सांसारिकशब्देन दुःखमिश्रितत्वोक्तेर्दुःखस्यापि सर्वस्य सांसारिकत्वाद् न भेदकथनमात्रेणात्र साकल्यमुच्यते । इच्छाद्वेषयोः सुखदुःखविषयत्वं साध्यविषयत्वम् । स्रक्चन्दनादिकण्टकादिविषयत्वं साधनविषयत्वम् । (सुखविषयिणीच्छा साध्यविषया)‡‡ । विहितमग्निहोत्रादि । निषिद्धं कलञ्ज(दग्धान्न)§§ भक्षणादि । उदासीनं लौकिकं भोजनादि । एतानि विषयो यस्य स तथा स त्रेधा इत्यर्थः ॥

**गुरुत्वं समाहाररूपमेकावयवि‖‖निष्ठं च ॥**

समाहारस्य रूपमिव रूपं यस्य स तथा । एकैकमाषापेक्षया राशीकृतस्य माषस्य गुरुत्वाधिक्यदर्शनात् । अतः समाहाररूपं गुरुत्वमौपाधिकमित्यर्थः । ननु गुरुत्वमेक¶¶मनेकवृत्ति द्रव्यसमाहारमात्रादाधिक्योपपत्तेर्न व्या-

---

* ( ) एतन्मध्यगग्रन्थस्थाने ऊहानध्यवसाययोस्तु संशये इति २ पु॰ पा॰ ।

† ( ) एतन्मध्यगग्रन्थस्थाने इह पुरुषेण न भवितव्यमित्यपीति २ पु॰ पा॰ ।

‡ स्मरणादिति २ पु॰ पा॰ । § लक्षणकथनं चेत् तर्हीति १ पु॰ पा॰ ।

‖ नार्धजरतीन्याय इति १ पु॰ पा॰ । ¶ अतिशब्दो नास्ति २ पु॰ ।

** सुखं तु इति तुशब्दो ऽधिकः ३ पु॰ । †† ( ) एतन्मध्यस्थो ग्रन्थो नास्ति १ पु॰ ।

‡‡ ( ) एतन्मध्यगो ग्रन्थः २ पु॰ नास्ति । §§ ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ ।

‖‖ एकानेकावयवीति ३ पु॰ पाठः । ¶¶ एकमिति नास्ति २ पु॰ ।

सज्यवृत्तित्वाङ्गीकारः । एकावयविनिष्ठम् एकद्रव्यनिष्ठम् । अवयविपदेन द्रव्यस्य विवक्षितत्वात् । अन्यथा परमाणुगुरुत्वसंग्रहो न स्यात् । तथा चैकद्रव्यनिष्ठं गुरुत्वं द्रव्याणामनेकेषां समाहाराद्गुरुत्वमपि समाहृतमिव दृश्यते इति ॥

**द्रवत्वं सांसिद्धिकं नैमित्तिकं च । स्नेहः स्वाभाविक औपाधिकश्चेति ॥**

सांसिद्धिकं स्वभावसिद्धद्रव्योत्पत्तिसमनन्तरमेवोत्पन्नमिति यावत् । तच्च जलनिष्ठम् । नैमित्तिकमग्निसंयोगाज्जायमानं घृतादिपार्थिवनिष्ठं सुवर्णादितैजसनिष्ठं च । स्वाभाविको जले । औपाधिकस्तैलादौ । जलसम्बन्धेनाच प्रतीयमानत्वात् ॥

**संस्कारो वेगो भावना स्थितिस्थापकश्च ॥**

वेगः शरीरादौ । भावना ऽनुभवजन्या स्मृतिजनिका ऽऽत्मनिष्ठा । स्थितस्य पूर्वं विद्यमानस्याऽवस्थाविशेषस्य स्थापकः । यथा कटादौ वेष्टनक्रियादिजनकः ॥

**धर्मः प्रवर्तको निवर्तकश्च । अधर्मः फलावसानो नमस्कारादिनाश्यश्च ॥**

( धर्मो द्विविधः )* । य इष्टे पुरुषं प्रवर्तयति स प्रवर्तकः । अनिष्टान्निवर्तयति स निवर्तकः । ( अधर्मो द्विविधः )† । दुःखफलमवसानमन्तो यस्य‡ स तथा । अकृतप्रायश्चित्तस्य कर्मणो भोगादेव क्षयात् । नमस्कारेण§ मङ्गलमुच्यते । तेन प्रतिबन्धकदुरितरूपाधर्मनाशः । आदिपदा||त्प्रायश्चित्तादि गृह्यते । कृते प्रायश्चित्ते ब्रह्महत्यादिरधर्मो नाश्यते¶ ॥

**शब्दो वर्णात्मको ऽवर्णात्मकश्च । अत्र** गन्धसंयोगविभागपरत्वाऽपरत्वसुखदुःखद्वेषसंस्कारधर्माधर्मशब्दा†† अव्यापकाः । बुद्धीच्छाप्रयत्ना उभयरूपाः ।**

---

* ( ) अयं ग्रन्थो नास्ति २ पु॰ ।

† ( ) अयमपि ग्रन्थो नास्ति २ पु॰ ।

‡ अफलमवसानं यस्येति २ पु॰ ।

§ नमस्कार इति २ पु॰ ।

|| आदिग्रहणादिति २पु पा॰ ।

¶ अधर्मो नाश्य इति २ पु॰ पा॰ ।

** तत्रेति ३ पु॰ पा॰ ।

†† शब्दा नित्यैकरूपा अन्ये तु नित्यानित्यरूपाः । संयोगादिशब्दान्तास्तु अव्यापका एवेति ३ पु॰ पा॰ ।

**अन्ये स्वाश्रयव्यापकाः । उत्क्षेपणादयो विहितनिषिद्धोदासीनरूपाः ॥**

(शब्दो द्विविधः)* । वर्णात्मको गकारादिः । अवर्णात्मको मृदङ्गध्वन्यादिः ॥

गुणानामनित्यत्वादिरूपेणापरं विभागमाह अथेति । अन्ये इति । रूपरसस्पर्शाः संख्यैकत्वे परिमाणपृथक्त्व†गुरुत्वद्रवत्वस्नेहाः परमाणुगता नित्याः । (कार्यगता अनित्याः)‡ । बुद्धीच्छाप्रयत्ना ईश्वरगता नित्याः । क्षेत्रज्ञगता अनित्या इत्यर्थः । (प्रकारान्तरेणापि तेषां विभागमाह संयोगेति । उभयरूपा इति । ईश्वरे व्यापका अनीश्वरात्मन्यव्यापका इत्यर्थः)§ । अन्ये रूपादय आश्रयव्यापकाः स्वाधारमभिव्याप्य वर्तन्त इत्यर्थः । विहितान्युत्क्षेपणादीनि अर्थप्रक्षेपादयः‖ । निषिद्धानि सूत्क्षेपादीनि । उदासीनानि अवक्षेपादीनि ॥

**सामान्यं जातिरूपमुपाधिरूपं च । जातिः सत्ता द्रव्यगुणकर्मत्वादि । उपाधिरूपं पाचकत्वादि । प्रागभावादयः प्रतियोगिभेदादनन्ता एव ॥**

सामान्यस्याऽनुक्त विभागमाह सामान्यमिति । तत्र सत्ता जातिः परैव । व्यापकत्वात् । द्रव्यत्वादीनि घटत्वाद्यपेक्षया पराणि । गुणत्वादीनि नीलत्वाद्यपेक्षया पराणि । कर्मत्वादीनि स्वावान्तरजात्यपेक्षया पराणि । सत्तापेक्षया एतान्यपराणि । घटत्वादीन्यपराण्येव । अतः सत्तादीनि जातिरूपाणीत्यर्थः । कर्मत्वादीत्यादिपदात्पृथ्वीत्वादि गृह्यते । पाकादिक्रियासम्बन्धात्पाचकत्वाद्यौपाधिकमित्यर्थः । प्रागभावादीनां विभागाभावे हेतुमाह प्रतियोगीति । प्रतियोगिनामनन्तत्वात्प्रागभावादयोऽप्यनन्ता एव ॥

**मध्यत्वं¶ परत्वापरत्वाभावः ॥**

---

* ( ) एतन्मध्यगो ग्रन्थस्त्रुटितः २ पु॰ ।
† स्पर्शसंख्यैकत्वैकपृथक्त्वेति २ पु॰ पा॰ ।
‡ ( ) अयं ग्रन्थो नास्ति २ पु॰ ।
§ ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ ।
‖ प्रक्षेपणादय इति २ पु॰ पा॰ ।
¶ मध्यमत्वमिति २ पु॰ पा॰ ।

ननु मध्यत्वं नाम पदार्थान्तरं कुतो नोद्दिष्टम् इत्यत आह मध्यत्वमिति। संनिकृष्टविप्रकृष्टयोः परापरबुद्धिकरणयोरभाववत्त्वबुद्धे*र्जायमानत्वात् तस्याभावे ऽन्तर्भाव इत्यर्थः॥

## अन्धकारो ऽप्यभावः† ॥

नन्वन्धकारः पदार्थान्तरं वर्त्ततीति। स तावद् न गुणादिषट्कं रूपवत्त्वात् क्रियावत्त्वाच्च। गुणादीनां तदभावात्। तदुक्तं प्रशस्तपादभाष्ये‡ गुणादीनां निर्गुणत्वनिष्क्रियत्वे इति। नाप्याकाशादिपञ्चकम्। तत एव। नापि पृथिव्यादिचतुष्टयम्। स्पर्शरहितत्वात्। न चानुद्भूतस्पर्शः कल्प्यः। कल्पकाभावात्। न च रूपवत्त्वमेव कल्पकम्। रूपवतः पृथ्वीत्वादिजातीयस्य क्वाप्युद्भूतस्पर्शवत्त्वनियमात्। तमसि च क्वापि स्पर्शानुभवाऽभावात्। अननुभूतस्पर्शस्याऽनुभूतत्वकल्पना§ऽयोगात्। तस्माद्दशमं द्रव्यमन्धकारः। स कुतो नोद्दिष्ट इत्यत आह अन्धकारो ऽपीति। अयमाशयः। यद्यन्धकारो भावरूपः स्यात् तदा|| ऽऽलोकनिरपेक्षचक्षुर्ग्राह्यो न स्यात्। न च तेजसः तेजोन्तराऽनपेक्षत्वे ऽपि चाक्षुषत्वात् तत्र व्यभिचारः। तत्राप्यवयविग्रहे चक्षुषा तदवयवापेक्षणात्। त्र्यणुके तदभाव इति चेत् तत्रापि जालान्तरे सौरकिरणापेक्षणात्। अतो यश्चाक्षुषो भावरूपः स¶ आलोकनिरपेक्षचक्षुर्ग्राह्यो न भवति इत्यापाद्यापादकयोर्व्याप्तिग्रहः**। तस्मादालोकाभाव एवान्धकारः। प्रमाणं तु अन्धकारो ऽभावः आलोकनिरपेक्षचक्षुर्ग्राह्यत्वाद् आलोकाभाववत्। नन्वभावत्वे ऽपि घटाभाववद् आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यादिति चेद् अभावग्रहे प्रतियोगिसत्त्वस्यानपेक्षत्वात्††(वैपरीत्येन प्रत्युत)‡‡प्रतियोगिनि सति तदभावग्रह एव तत्र न स्यात्। न हि घटे सति तदभावो गृह्यते। अत§§ आलोकस्यान्धकारप्रतियोगित्वात् तदभावे ऽपि तमसश्चाक्षुषत्वं न दोषाय। रूपं तु इन्द्रनीलादिगतमारोप्यते||||।

---

* अभावमध्यबुद्धेरिति १ पु॰ पा॰। अभावत्वबुद्धेरिति २ पु॰। परमुपरितन एव पाठः संगतः।

† अभाव एवेति ३ पु॰ पा॰।

‡ साधर्म्यवैधर्म्यनिरूपणावसरे।

§ अभिभूतत्वकल्पनेति २ पु॰ पा॰।

|| तर्हीति २ पु॰ पा॰। ¶ अतो भावरूपो यो यश्चाक्षुषो भावरूपः स स इति १ पु॰ पा॰।

** आपाद्यापादकयोर्विरोधिग्रहणम् इति २ पु॰ पा॰।

†† अनपेक्षितत्वादिति २ पु॰ पा॰।

‡‡ ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰।

§§ अत इति २ पु॰ नास्ति।

|||| स्मर्यमाणमारोप्यते इति २ पु॰ पा॰।

शुक्लत्वाभाव आरोपे सादृश्यम्* । क्रिया च दीपादिगता† आरोप्यते । अतस्ताभ्यां न द्रव्यत्वसिद्धिः ॥

**शक्तिर्द्रव्यादिकस्वरूपमेव‡ ॥**

ननु शक्तिः पदार्थान्तरम् । तत्र प्रमाणम् । अयं वह्निर्दाहानुकूलातीन्द्रियाद्दिष्ट§धर्मसमवायी दाहजनकत्वाद् यदेवं तदेवं यथा ऽऽत्मा । न च साध्यवैकल्यं दृष्टान्तस्य । एवंविधस्याऽदृष्टस्य तत्र समवायात् । स्थितिस्थापकोष्णस्पर्शात्मादिसंयोगे|| सिद्धसाधनतावारणाय दाहानुकूलेत्यादिविशेषणानि ¶ । अतीन्द्रियप्रतिबन्धकाभावेन सिद्धसाधनतावारणाय समवायीति । एवंमानसिद्धा शक्तिः कुतो नोद्दिष्टा तत्राह शक्तिरिति । वह्न्यादि कारणस्वरूपमेव ** न पदार्थान्तरमित्यर्थः । अनुमाने चात्मत्वमुपाधिः†† ॥

**वैशिष्ट्यं तु‡‡ विशेषणविशेष्यभावः सम्बन्ध§§ एव ।**

नन्वघटं भूतलमित्यादिविशिष्टज्ञानं विशेषणविशेष्यसम्बन्धजन्यं विशिष्टज्ञानत्वाद् दण्डीति ज्ञानवद् इति परिशेषात् सम्बन्धत्वेन वैशिष्ट्यसिद्धिः । तत् कुतो नोक्त||||मित्याह वैशिष्ट्यमिति । अघटं भूतलमित्यत्रापि स्वरूपसम्बन्धस्य विद्यमानत्वात् तेनैव सिद्धसाधनम् अनुमानमित्यर्थः । तत्रापि सम्बन्ध एव विशिष्टबुद्धिहेतुर्न तु विशेषणादयः सर्वे ऽपि । तथा सति प्रत्येकविशिष्टबुद्धिप्रसङ्गादिति ॥

**(ज्ञातता ज्ञानविषयसम्बन्ध एव) ¶¶ सादृश्यमुपाधिरूपं सामान्यम् ॥**

ननु ज्ञातो घट इत्यादौ ज्ञानजन्यं घटादिविषयनिष्ठं ज्ञातताख्यं पदार्थान्तरमस्ति तद्वक्तव्यमत आह ज्ञाततेति । ज्ञानविषययोः सम्बन्ध एव ज्ञातता तदतिरिक्तत्वे मानाभावादित्यर्थः ॥

---

* शुक्लत्वाभाव आरोप्यते शुक्लत्वाभाव आरोप्ये सादृश्यमिति २· पु· पा· ।

† दीपादिगता गृह्यमाणेति २ पु· पा· ।

‡ शक्तिः स्वरूपमेवेति ३ पु· ।

§ अदृष्टेति पुस्तकद्वये ऽसङ्गतमिव दृश्यते ।

|| स्पर्शादिसंयोगे इति २ पु· पा· ।

¶ विशेषणानीति २ पु· नास्ति ।

** द्रव्यादिस्वरूपकारणरूपमेवेति २ पु· पा· ।

†† चात्मत्वमुपाधिरिति १ पुस्तके । चायमुपाधिरिति २ पुस्तके पाठः परं बहिर्भागे चात्मत्वमुपाधिरिति लिखितम् २ पु· ।

‡‡ विशिष्टं त्विति ३ पु· पा· ।

§§ विशेष्यतत्संबन्धा एवेति ३ पु· पा· ।

|||| कुतो नोद्दिष्टमिति २ पु· पा· ।

¶¶ ( ) नास्ति २ पु· ।

ननु गोसदृशो गवय इत्यादौ सादृश्यं पदार्थान्तरमस्ति तदुद्दिष्टव्यमत आह सादृश्यमिति । गोसादृश्यं गोगतं शृङ्गित्वादि गवयगतं तच्चौपाधिकं सामान्येनोद्दिष्टमेवेत्यर्थः ॥

**लघुत्वं गुरुत्वाभावः । एवमन्यस्यापि पदार्थस्य सतोऽत्रैवान्तर्भावः । यथा संख्याया एव गुणे* ॥**

ननु† लघुत्वं पदार्थान्तरमत आह लघुत्वमिति । नन्वन्ये प्रमाणादयः पदार्थाः सन्ति ते कुतो नोक्ता इत्यत आह एवमिति । तेषामपि बुद्धिद्रव्यादौ यथायथमन्तर्भावान्नाधिक्यमित्यर्थः । नन्वेवमन्तर्भावेऽपसिद्धान्त इत्याशङ्क्य सूत्रकृतोऽपि संमत इत्याह यथेति । गुणगणनायां रूपरसगन्धस्पर्शसङ्ख्यापरिमाणानीति‡ सङ्ख्याया गुणे अन्तर्भावः सूत्रकृता§ उक्तः । तद्वदपरेषामपीत्यर्थः ॥

**एतेषु मध्ये‖ नित्यानां कारणत्वमेव । अनित्यानां कारणत्वं कार्यत्वं च । तच्च समवायिकारणम् असमवायिकारणं निमित्तकारणं चेति त्रिविधं कारणम् । अपरे भेदाः स्वयमूहनीयाः ॥**

कारणत्वकार्यत्वाभ्यां विभागमाह¶ एतेष्विति । नित्यानामाकाशादीनाम् । अनित्यानां द्व्यणुकादीनाम् । कारणं विभजते तच्चेति । तच्च कारणं त्रिविधं त्रिप्रकारमित्यर्थः । समवायिकारणं तन्त्वादि । असमवायिकारणं तत्संयोगादि । निमित्तं कुविन्दादि । ननु मनसा सह पृथिव्यादिचतुष्टयं मूर्तम् अन्यत्सर्वममूर्तं तेषामेव पञ्चानां क्रियावत्त्वम् अन्येषां निष्क्रियत्वमित्यादयो भेदाः कथं नोक्ता इत्यत आह अपरे इति ॥

**एतेषां तत्त्वज्ञानं निश्श्रेयसे हेतुः । तत्त्वमनारोपितं रूपम् । तस्य ज्ञानमनुभवः ॥**

---

* संख्याया इव गुणे इति ३ पु॰ पा॰ ।
† नन्विति नास्ति २ पु॰ ।
‡ गन्धपरिमाणानीति २ पु॰ पा॰ ।
§ सूत्रकृतेति नास्ति २ पु॰ ।
‖ एतेषु च मध्य इति ३ पु॰ पा॰ ।
¶ विभागान्तरमाहेति २ पु॰ ।

एवं द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुरिति सूत्रोक्तपदार्थानुद्दिश्य तच्छेषं व्याकरोति एतेषामिति । उक्तानां* पदार्थानामित्यर्थः । तत्त्वपदस्य रूढ्यर्थमाह† तत्त्वमिति । आरोपितशुक्तिरजतादावतिव्याप्तिवारणाय अनारोपितमिति । तस्यारोपितत्वान्नातिव्याप्तिः । ज्ञानपदस्य अनुभवपरतामाह तस्येति ॥

**स च श्रवणमनननिदिध्यासनसाक्षात्कारलक्षणश्चतुर्विधः ।**

तदवान्तरभेदमाह स चेति । अनुभव इत्यर्थः । श्रुतिस्मृतीतिहासपुराणेषु शब्दतात्पर्यावधारणं श्रवणम् । असम्भावनाविपरीतभावनानिरासेन युक्तिभिरनुचिन्तनं मननम् । श्रुतस्य मतस्य तथैव ध्यानं निदिध्यासनम् । इदमित्थमेवेत्यपरोक्षज्ञानं साक्षात्कारः । एते लक्षणं स्वरूपं यस्यानुभवस्य स तथा ॥

**निःश्रेयसं पुनस्तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावः ॥**

निःश्रेयसपदार्थमाह निश्श्रेयसं पुनरिति । समस्तानां दुःखानामभावः समस्तदुःखाभावः । तस्य मिथ्याज्ञानस्य कार्याणि तत्कार्याणि इति दुःखविशेषणम् । मिथ्याज्ञानं तदेव कारणं च मिथ्याज्ञानकारणं तस्य प्रध्वंसः तेन समानम् अधिकरणम् आधारो यस्य तत्कार्यसमस्तदुःखाभावस्य स तथा । तत्त्वज्ञानोत्पाद्यश्चासौ मिथ्याज्ञानकारण‡प्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावश्चेति कर्मधारयः । तत्र तत्त्वज्ञानोत्पाद्यसमस्तदुःखाभाव इति निःश्रेयसपदार्थ§निरूपणम् । इतरत्तु समस्तदुःखाभावसामग्रीकथनम् । (अभावो मोक्षः)‖ । तत्र घटाभावे मोक्षत्ववारणाय दुःखेति पदम्¶ । (अहिकण्टकादिजन्यदुःखाभावस्य सुषुप्तौ वर्तमानदुःखाभावस्य मोक्षत्वं मा भूदिति समस्तेति पदम् । एवमपि वक्ष्यमाणशरीरादि-

* उक्तानामिति नास्ति २ पु॰ ।
† रूढिमाहेति २ पु॰ पा॰ ।
‡ कारणेति नास्ति १ पु॰ ।
§ पदार्थेति नास्ति २ पु॰ ।
‖ ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ । ¶ वारणाय समस्तदुःखाभावेत्युक्तमिति २ पु॰ पा॰ ।

समस्तदुःखाभावो विद्यते प्रलये तद्वारणाय तत्त्वज्ञानोत्पाद्येति)* । प्रलये तु शरीरादेरभावो ऽदृष्टादिनिमित्तो† न तत्त्वज्ञानोत्पाद्य इति नातिव्याप्तिः ॥

ननु तत्त्वज्ञानस्य समस्तदुःखाभावोत्पादने किं द्वारमत आह मिथ्याज्ञानकारणप्रध्वंसेति । तत्त्वज्ञानेन दुःखाभावे जननीये‡ मिथ्याज्ञानप्रध्वंसो ऽवान्तरव्यापारः । कार्यकारणपदाभ्यां मिथ्याज्ञानकारणप्रध्वंसे तत्कार्यमिथ्याज्ञानदुःखस्यावश्यं ध्वंसो भवतीति दर्शयति । देवदत्तमिथ्याज्ञानकारणध्वंसे§ यज्ञदत्तसमस्तदुःखाभावो नास्तीति समानाधिकरणेत्युक्तम् । यस्मिन्नात्मनि मिथ्याज्ञानध्वंसः तस्मिन्नेव समस्तदुःखाभाव इत्यर्थः ॥

ननु को ऽयं समस्तदुःखाभावः किं प्रागभाव उत प्रध्वंसाभाव आहो स्विद्‖ अन्योन्याभावः किं वा अत्यन्ताभावः । नाद्यान्त्यौ । तयोरनुत्पत्तेरपुरुषार्थत्वात् । पुरुषकृत्युत्पाद्यो¶ हि पुरुषार्थः । प्रागभावात्यन्ताभावयोरनादित्वेनानुत्पाद्यत्वात् । किं च दुःखात्यन्ताभावस्य समस्तदुःखप्रागभावस्य चात्मन्यसंभवाद्** बहूनां दुःखानां तत्र निष्पन्नत्वात् । नापि अन्योन्याभावो मोक्षः†† । (संसारदशायामपि दुःखमात्मा न भवतीति)‡‡ तत्सद्भावेन मुक्तत्वप्रसङ्गात् । नापि दुःखध्वंसो मोक्षः । समस्तशब्देन शरीरादेर्विवक्षितत्वात् । तस्य चातीतस्य स्वत एव ध्वंसेन§§ तत्त्वज्ञानस्य क्षणाद् वर्तमानस्य पूर्ववत्तत्कारणादेव प्र‖‖ध्वंससंभवात्¶¶ । (आगामिशरीरादेस्त्वनुत्पन्नत्वेन ध्वंसाऽसंभवात्)*** । आगामिशरीरादिकमुत्पाद्य ध्वंसे तत्त्वज्ञानस्यापि दुःखजनकत्वप्रसङ्गात् । तस्मात्समस्तदुःखाभावो मोक्षो††† ऽनुपपन्न इति चेद् ।

अत्रोच्यते । आगामिशरीराद्यनुत्पादरूपदुःखप्रागभाव एव मोक्षः । तत्त्वज्ञाने हि सति आगामिशरीरादिकं नोत्पद्यते । न च तस्यानुत्पाद्य-

* ( ) एतन्मध्यस्थो ग्रन्थस्त्रुटितः २ पु॰ ।
† अदृष्टादेर्निमित्त इति १ पु॰ पा॰ ।
‡ दुःखाभावजनने ऽपीति २ पु॰ पा॰ ।
§ मिथ्याज्ञानध्वंसेपीति १ पु॰ पा॰ ।
‖ उताहो इति २ पु॰ ।
¶ पुरुषप्रयत्नोत्पाद्य इति २ पु॰ पा॰ ।
** अनादित्वेनापुरुषार्थत्वाद्दुःखात्यन्ताभावस्य चात्मन्यसंभवादिति २ पु॰ पा॰ ।
†† नापि तदन्योन्याभाव इति २ पु॰ पा॰ ।
‡‡ ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ ।
§§ ध्वस्तत्वेनेति २ पु॰ पा॰ ।
‖‖ प्रशब्दो नास्ति २ पु॰ ।
¶¶ प्रध्वंसासंभवादिति २ पु॰ पा॰ ।
*** एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ ।
††† मोक्ष इति नास्ति २ पु॰ ।

त्वेनापुरुषार्थत्वम् । प्रायश्चित्तादिसाध्यदुःखानुत्पादवत् तस्यापि परिपालनरूपस्य संभवात्* । तत्त्वज्ञाने हि† सति दुःखकारणमिथ्याज्ञानध्वंसात् प्रागभावस्योत्तरकालसम्बन्धरूपपरिपालनं संभवति । तत्त्वज्ञानाभावे हि दुःखकारणेन प्रागभावनाशाद् दुःखोत्पत्तिरेव भवति । अतो ऽन्वयव्यतिरेकाभ्यां प्रागभावपरिपालनं साध्यमिति नापुरुषार्थत्वम्‡ । न च समस्तदुःखप्रागभावासंभवः । समस्तपदेन शरीराद्येकविंशतिप्रकारस्य विवक्षितत्वात् । तस्य चागामिनः पूर्वमजातत्वेन प्रागभावसंभवात् । न च प्रागभावस्य प्रतियोगिजनकतानियमाद् मुक्तस्य सांसारिकताप्रसङ्ग§ इति वक्तव्यम्‖ । मोक्षशास्त्रविरोधेन मोक्षरूपप्रागभावव्यतिरिक्ते प्रागभावे प्रागभावप्रतियोगिजनकत्वनियमस्य संकोचनात् । अन्यथा प्रायश्चित्तविधेरपि वैयर्थ्यापत्तिः । तद्विनाश्यपापजन्यदुःखप्रागभावस्यापि प्रतियोगिजनकत्वानियमात् । मोक्षशास्त्रं तु न स पुनरावर्तते इमं संसारं मानवमावर्त्तं नावर्तन्ते¶ इति च ॥

यद्वा चरमशरीरादिदुःखध्वंसो मोक्षः । चरमं शरीरादिकं च तत्त्वज्ञानेन** संचितकर्मक्षयाय भोगार्थं योगजसामर्थ्य††गृहीतशरीरमध्ये यदन्तिमं तदेव । अथ वा यच्छरीरे तत्त्वज्ञानमुत्पन्नं तदेव शरीरादिकं चरमम् इतरेषां भोगार्थं स्वयम् उत्पादितत्वेन चरमत्वाभावात् ॥

ननु तत्त्वज्ञानं विना ऽपि वर्तमानशरीरादिध्वंसः पूर्ववत्‡‡ सम्भवतीति चेद् न । तदा तस्य चरमत्वाभावात् । चरमध्वंसस्त्वन्वयव्यतिरेकाभ्यां तत्त्वज्ञानजन्य एव । तथा हि । तत्त्वज्ञानेन हि मिथ्याज्ञानध्वंसे तन्मूलरागद्वेषयोरभावात् तदधीनधर्माधर्मसाधने प्रवृत्त्याद्यभावेन तद्धेतुकाग्रेतन§§ जन्मादेरभावात् तन्निमित्तदुःखस्याप्यभावः । तथा च तदेव तत्त्वज्ञानसमानकालीनशरीरादिकं चरमम् । एवं च तत्त्वज्ञानाभावादस्मदादेश्चरमदुःखध्वंसो नाद्याप्यजनि । येषां‖‖ शुकादीनां शरीराद्यनात्मव्यतिरिक्त आत्मेत्येवंसाक्षात्काररूपस्तत्त्वावबोधः समभूत् तेषां चरमदुःखध्वंसो ऽप्य-

* परिपालनसंभवादिति २ पु॰ पा॰ । † हिशब्दो नास्ति २ पु॰ । ‡ नापुरुषार्थ इति २ पु॰ पा॰ । § संसारताप्रसङ्ग इति २ पु॰ पा॰ । ‖ वाच्यमिति २ पु॰ पा॰ । ¶ इदं मानवमावर्तं नावर्तते इति २ पु॰ पा॰ । ** तत्त्वज्ञाने सतीति २ पु॰ पा॰ । †† योगसामर्थ्येति २ पु॰ पा॰ । ‡‡ पूर्वपदेर्वेति २ पु॰ पा॰ । §§ अग्रेतनेति क्वचित्स्तं २ पु॰ । ‖‖ एषां चेति २ पु॰ पा॰ ।

जनिष्टेत्यन्वयव्यतिरेकाभ्यां तस्य कारणता सिध्यति । अतो नात्र कश्चिद्दोषः । मोक्षसाधनं ज्ञानमेव । ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते इति वचनात् ॥

( ननु कर्मवद् न ज्ञानकर्मसमुच्चयः कर्मणि मिथ्याज्ञाननाशकत्वादर्शनात् । तन्नाशमन्तरेण मोक्षाऽसंभवात् )*। तत्त्वज्ञानस्यैव रज्जुसर्पभ्रमादौ मिथ्याज्ञाननाशकत्वदर्शनात् । न हि तत्र निकटोपसर्पणादिक्रियावतो ऽपि रज्जुतत्त्वज्ञानं विना सर्पभ्रमो निवर्तते इति सर्वमवदातम् ॥

**दुःखं तु शरीरं षडिन्द्रियाणि षड्विषयाः षड् बुद्धयः सुखं दुःखं चेत्येकविंशतिप्रकारम् । ( इत्युद्देशप्रकरणम् )† ॥**

किं ‡ तत्समस्तदुःखं यस्याऽभावो मोक्ष इत्यत आह दुःखमिति । शरीरं प्रसिद्धम् । षडिन्द्रियाणि घ्राणरसनचक्षुःश्रोत्रत्वङ्मनांसि । तद्ग्राह्या विषयाः षड् गन्धरसरूपशब्दस्पर्शसुखादयः § । तज्ज्ञानादि‖षड्बुद्धयः । सुखं दुःखं च प्रसिद्धम् । तत्र शरीरादीनां दुःखसाधनत्वात्सुखस्य दुःखसंभिन्नत्वाद्¶ दुःखत्वम् । दुःखं च मुख्यमेवेति दुःखविवेकः ** ॥

माधवाख्यसरस्वत्या रचिता मितभाषिणी ।
तत्रोद्देशप्रकरणं व्याख्यागोचरतामियात् ॥

**इदानीं लक्षणाधीनत्वात्तत्त्वज्ञानस्य लक्षणमेवोच्यते । तत्र केवलव्यतिरेकी हेतुविशेषो लक्षणम् ॥**

एवं सूत्रशेषं व्याख्यायेदानीमुत्तरग्रन्थसंगतिमाह इदानीमिति । एवकारेण परीक्षाव्युदासः । लक्षणमेवोच्यते इति । अत्र हेतुमाह †† लक्षणेति । लक्षणेन विना पदार्थानामितरेतरव्यावृत्तिरूप‡‡तत्त्वज्ञानस्या-

---

* ( ) एतन्मध्यगतो ग्रन्थस्त्रुटितः २ पु॰ । † ( ) इदं नास्ति ३ पु॰ ।
‡ ननु किमिति २ पु॰ पा॰ । § सुखादीनीति २ पु॰ पा॰ । ‖ तत्त्वज्ञानादीतीति २ पु॰ पा॰ ।
¶ दुःखसंश्रितत्वादिति २ पु॰ पा॰ । ** दुःखमविवेक इति पाठः १ पु॰ ।
†† इत्यत्राहेति १ पु॰ पा॰ । ‡‡ व्यावृत्तिव्यवहाररूपेति १ पु॰ पा॰ ।

ऽभावाद् आत्मानात्मविवेकासंभवात् * तदर्थं लक्षणमेवोच्यते ( इत्यर्थः । लक्षणमधीनं निमित्तं यस्य तस्य भावस्तत्त्वं तस्मादिति विग्रहः । लक्षणज्ञानाय तल्लक्षणमाह ) † तत्रेति । न चैवमनवस्था तस्य लक्षणज्ञानस्य‡ लक्षणान्तराधीनत्वादिति वाच्यम् । इदमेव लक्षणं सर्वस्याऽपि लक्षणस्य ज्ञानं कुर्वत्स्वस्यापि लक्षणत्वेन § सर्वान्तःपातात् स्वज्ञानमपि जनयति । स्वाध्यायप्रमेयादिपदवत् । न तु स्वलक्षणज्ञानाय लक्षणान्तरमपेक्ष्यते येनानवस्था स्यात् । तथाप्यात्माश्रय इति चेद् न । अव्यवधानेन स्वेनैव स्वज्ञानमात्माश्रयः । अत्र सर्वलक्षणद्वारा स्वस्यापि ज्ञानं जनयति इति व्यवधानाद् न दोषः । तस्माल्लक्षणज्ञानाय लक्षणं वाच्यम् इति । तदुच्यते तत्रेति । तत्र लक्षणानां मध्ये ‖ । विशेषपदार्थे ऽतिव्याप्तिवारणाय हेत्विति । अन्वयिनि ¶ तद्वारणाय व्यतिरेकीति । अन्वयव्यतिरेकिणि वारणाय** केवलेति । ( जीवच्छरीरं सात्मकं ) †† प्राणादिमत्त्वादित्यादौ तद्वारणाय विशेषपदम् । केवलव्यतिरेकिहेतुविशेषत्वमसाधारणधर्मत्वम् ‡‡ ।

**प्रयोगस्तु लक्षणमितरेभ्यो भिद्यते केवलव्यतिरेकिहेतुविशेषवचन[1]त्वाद् यदितरेभ्यो न भिद्यते तत्केवलव्यतिरेकिहेतुविशेषवचन[2]मपि §§ न भवति यथा धूमवत्त्वं तथा चेदं केवलव्यतिरेकिहेतुविशेष‖‖वचनं[3] न भवतीति न तस्मादितरेभ्यो न भिद्यतइति न किं तु भिद्यतएव ॥**

ननु ¶¶ केवलव्यतिरेकी पञ्चावयवोपपन्नः । लक्षणस्य तदभावात् कथं तत्त्वमित्याशङ्क्यानुमानं रचयति प्रयोगस्त्विति । लक्षणं पक्षः इतरेभ्यो

---

* विवेकाभावादिति २ पु॰ पा॰ । † ( ) एतन्मध्यगो ग्रन्थो नास्ति १ पु॰ ।

‡ लक्षणस्येत्येव पाठः १-२ पु॰ । § लक्षणत्वेनेति नास्ति २ पु॰ ।

‖ मध्ये इत्यर्थ इति २ पु॰ पा॰ । ¶ अन्वयिन्यपीत्यपिशब्दो ऽधिकः २ पु॰ ।

** व्यतिरेकिणि प्रसक्तिवारणायेति २ पु॰ पा॰ । †† ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ ।

‡‡ असाधारणत्वमिति २ पु॰ पा॰ । असाधारणधर्मवचनत्वमिति २ पु॰ पा॰ ।

§§ विशेषेऽपीति पाठो युक्त इति के॰ च॰ भट्टाचार्यः । पुस्तकत्रये ऽपि उपरितन एव पाठो दृश्यते । ‖‖ विशेष इति युक्तमिति के॰ च॰ भ॰ । ¶¶ नन्विति नास्ति २ पु॰ ।

१-२-३ एतदङ्काङ्कितस्थले वचनशब्दो न युक्त इति के॰ च॰ भ॰ ।

भिद्यते इति साध्यम् । लक्षणव्यतिरिक्तसकलप्रतियोगिकान्योन्याभाववदित्यर्थः । व्यतिरेकव्याप्तिमाह यदिति । धूमवत्त्वस्ये*तरमध्यपतितत्वाल्लक्षणनिष्ठभेदप्रतियोगित्वं न तु भेदाधारत्वम् । अत इतरेभ्यो† न भिद्यते इति साध्याभावो ऽस्ति हेत्वभावो ऽप्यस्ति इति व्यतिरेकदृष्टान्तत्वं धूमवत्त्वस्य व्यतिरेकव्याप्तेर्हेतोः पक्षनिष्ठत्वलक्षणं व्यतिरेकोपनयमाह न भवतीतीति । किं तु भवत्येवेत्यर्थः । प्रतिज्ञातार्थविपरीतनिरासफलकं निगमनमाह तस्मादिति । तस्माद्धेतुमत्त्वादित्यर्थः ॥

**एवं सर्वत्र लक्षणे प्रयोगो द्रष्टव्यः । तत्र पदार्थसामान्यलक्षणं कृतमेव ॥**

सर्वेषु लक्षणेष्वितरभेदसाधनप्रकार एवमेवेत्यतिदिशति एवमिति । यस्य यद् लक्षणं तमेव हेतुं विधाय लक्ष्यमेव पक्षं कृत्वा इतरभेदसाधनं व्यतिरेकिणा कर्तव्यमित्यर्थः । सामान्यलक्षणं विना विशेषलक्षणाऽसंभवमाशङ्क्योक्तं स्मारयति तत्रेति । तत्र लक्षणे वक्तव्ये सति सामान्यलक्षणं कृतमित्यन्वयः‡ । यद्यपि प्रमितिविषयत्वं न पदार्थसामान्यलक्षणं तस्य केवलान्वयित्वेन केवलव्यतिरेकिहेतुविशेषरूपत्वाभावात्§ तथापि|| लक्षणशब्देनात्र पदार्थमात्रवृत्ति¶धर्मो गौण्या वृत्त्या विवक्षितः । गुणस्तु तावन्मात्रवृत्तित्वम् । लक्षणं हि लक्ष्यमात्रे वर्तते प्रमितिविषयत्वमपि पदार्थमात्रे वर्तते अतो गुणयोगाल्लक्षणपदं ** पदार्थशब्दप्रवृत्तिनिमित्ते प्रमितिविषयत्वे वर्तत इति द्रष्टव्यम् । ग्रन्थकारोक्तस्यापि मुख्यत्वाऽसंभवे गौणत्वमाश्रयणीयमेवेति लक्षणशब्दो गौणः प्रयुक्तो ऽत्रेति द्रष्टव्यम् ॥

**द्रव्यं तु द्रव्यत्वसामान्ययोगि गुणवत्समवयिकारणं चेति ॥**

इदानीं द्रव्यादीनां क्रमेणलक्षणान्याह द्रव्यमित्यादिना । सामान्ययोगित्वं गुणादावतिव्यापकमिति द्रव्यत्वेति । ननु द्रव्यत्वं भावरूपं

---

* धूमस्येति २ पु॰ पा॰ ।
† अतो ऽन्येभ्य इति २ पु॰ पा॰ ।
‡ इत्यर्थ इति १ पु॰ पा॰ ।
§ हेतुत्वाभावादिति २ पु॰ पा॰ ।
|| तथापीति न दृश्यते २ पु॰ ।
¶ वृत्तीति नास्ति २ पु॰ ।
** वर्तते इति तावन्मात्रवर्तित्वं गुणयोगात् । लक्षणपदमिति २ पु॰ पा॰ ।

नास्त्येव अद्रव्यव्यावृत्त्यैव सकलद्रव्यानुगतेन द्रव्यमिति व्यवहारोपपत्तेरिति वदन्तं बौद्धं निराकर्तुं सामान्येति पदम्* ॥

अयमत्राशयः । अद्रव्यापोहस्य द्रव्यनिरूप्यत्वात् प्रथमं द्रव्यव्यवहारो वक्तव्यः । स च अनुगतद्रव्यत्वसामान्यं विना न संभवतीति तत्प्रथममभ्युपेयम् । अन्यथा द्रव्यत्वज्ञाने सति† तदपोहेन द्रव्यानुगतव्यवहारः द्रव्यव्यवहारे च सति द्रव्यज्ञाननिरूप्यद्रव्यापोहज्ञानमितीतरेतराश्रयत्वम्‡ इति । एतत्सर्वं समानानां भावः सामान्यमिति पदव्युत्पत्त्यैव सूचितम् । एवमग्रे ऽपि सामान्यपदमपोहवादनिरासायेति द्रष्टव्यम् । तदपि सामान्यपदं जातिपरम् । तेन द्रव्यत्वं जातिर्नास्ति व्यञ्जकाभावाद् इति वदन् प्राभाकरो निरस्तो वेदितव्य इति सूचयन् द्रव्यत्वजातिव्यञ्जकमाह गुणवत्समवायिकारणं चेतीति । जात्यनाधाराद्व्यावृत्तस्तदाधारगतो धर्मो व्यञ्जकः§ । यथा गोत्वस्य सास्नादिमत्त्वं तथा गुणवत्त्वं समवायिकारणत्वं च द्रव्यत्वस्य व्यञ्जकम्‖ । (यत्र यत्र गुणवत्त्वं तत्र तत्र द्रव्यत्वमित्युपदेशसहकृतेन प्रत्यक्षेण रजतवद् द्रव्यत्वं प्रतीयते इत्यर्थः)¶ ।

यद्वा एतदपि लक्षणद्वयमेव** । न चोत्पन्ने द्रव्ये क्षणमात्रं गुणरहिते गुणवत्त्वमव्यापकमिति वाच्यम् । कदा चिद्गुणवत्त्वस्य लक्षणत्वात् । यद्वा गुणात्यन्ताभावविरोधिमत्त्वं गुणवत्त्वं विवक्षितम् । गुणात्यन्ताभावविरोधिनश्च गुणतत्प्रागभावतत्प्रध्वंसाभावाः । तद्वत्त्वं लक्षणार्थः । तथा चोत्पत्तिसमये ऽपि गुणप्रागभावो ऽस्ति अतो नाव्याप्तिरित्यर्थः । एवं समवायिकारणे ऽपि द्रष्टव्यम् । न चातिव्यापकमुभयम् । तदुभयाभावात्†† ॥

**गुणास्तु गुणत्वजातियोगी जातिमत्त्वे सत्यचलनात्मकत्वे सति समवायिकारणरहितश्चेति ॥**

---

* सामान्यपदमिति २ पु॰ पा॰ । † सतीति नास्ति १ पु॰ । ‡ इतरेतराश्रयत्वमिति २ पु॰ पा॰ । § जातेरन्यूनानतिरिक्तवृत्तिधर्मो व्यञ्जकः इति २ पु॰ पा॰ ।
‖ व्यञ्जकमस्तीति द्रव्यत्वं जातिरित्यर्थ इति २ पु॰ पा॰ ।
¶ ( ) एतन्मध्यगो ग्रन्थः २ पु॰ नास्ति । ** लक्षणत्वाद् द्वयमेवेति १ पु॰ पा॰ ।
†† उभयगुणादौ तदुभयाभावादिति २ पु॰ पा॰ । न चेत्याद्यभावादित्यन्तो ग्रन्थो न सङ्गतार्थः । कै॰ च॰ भ॰ ।

गुणत्वजातेर्व्यञ्जकमाह जातिमत्त्वे* इति । जातिमदचलनात्मकाऽसमवायिकारणत्वं गुणत्वजातिव्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । ( जातिरस्यास्तीति जातिमान् । तस्य भावस्तत्त्वं तस्मिन् सति । चलनं कर्म तदात्मकं न भवतीत्यचलनात्मकत्वे सति समवायिकारणं समवायिकारणत्वम् । धर्मिणा धर्मो ऽपि लक्ष्यते तद्रहित इत्यर्थः ) † । गगनारविन्दे ऽतिव्याप्तिवारणाय समवायीति ‡ । गगनारविन्दं कारणमेव न भवति गुणस्तु कारणं भवति समवायिकारणं न भवतीत्यर्थः । समवायिकारणत्वेन रहितं कर्मापि भवति तद्व्युदासायाऽचलनेति । कर्म तु चलनात्मकमिति तद्व्यावृत्तिः § । एवमपि सामान्यादौ प्रसङ्गः तद्वारणाय जातिमत्त्वे सतीति । सामान्यादिचतुष्टयं तु जातिरहितमिति न दोषः । कर्मणि द्रव्ये चातिव्याप्तिवारणाय द्वितीयतृतीयपदे ॥

**कर्म कर्मत्वजातियोगि आद्यसंयोगविभागयोरसमवायिकारणं चेति ॥**

कर्मत्वजातेर्व्यञ्जकमाह आद्येति । आद्यौ यौ संयोगविभागौ संयोगजविभागजव्यतिरिक्तौ तयोरसमवायिकारणत्वं कर्मत्वव्यञ्जकमित्यर्थः । ( व्यञ्जकाभावशङ्कानिरासाय )|| यद्वा लक्षणान्तरम् । चः समुच्चयार्थः । कारणमात्रमदृष्टादावतिव्यापकमतो ऽसमवायीति । एवं रूपादौ रूपादेरपि तन्त्वादिगतस्य पटादिगतरूपादिं प्रत्यसमवायिकारणत्वाद् अत आह संयोगविभागेति । एवमपि ¶ आद्यसंयोगविभागयोरतिव्याप्तिः तयोरपि संयोगजसंयोगविभागजविभागौ प्रति असमवायिकारणत्वात् । अत आद्येति ** । आद्यसंयोगविभागकारणत्वं तदाधारद्रव्ये ऽप्यस्तीति तद्वारणायासमवायीति । कारणपदं स्पष्टार्थम् । सामान्यादिषु जात्यभावाद् न जातिगर्भं लक्षणमित्येकमेव लक्षणम् ॥

**सामान्यं नित्यमेकमनेकसमवेतम् ।**

---

* जातिमत्त्वे सतीति २ पु· पा· ।  † ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु· ।
‡ असम्भववारणाय च समवायिपदमिति २ पु· पा· । § इति नातिव्याप्तिरिति २ पु· पा· ।
( ) || एतन्मध्यगतो ग्रन्थो नास्ति २ पु· । ¶ एवं चेति २ पु· पा· ।
** एतदग्रे संयोगविभागौ उत्तरसंयोगविभागौ प्रत्यसमवायिकारणमित्यग्रेव इत्यधिकं २ पु· ।

तत्र सामान्यं लक्षयति* नित्यमिति । समवेतमित्युक्ते रूपादावतिव्याप्तिरत आह अनेकेति । एतावत्युक्ते संयोगे ऽतिव्याप्तिरत आह नित्येति । नित्यमनेकसमवेतं सामान्यमित्युक्ते अनेकेषां विशेषाणामनेकसमवेतत्वं नित्यत्वं चास्तीति तत्रातिव्याप्तिवारणाय एकमिति के चित् । तदपरे न सहन्ते । एकवचनेनैवानेकत्वनिवृत्तेः । अतः स्वरूपसाधनायैव एकमिति । यद्वा इदमेकं लक्षणं प्रत्येकशब्देनोच्यते । लक्षणान्तरन्तु स्वयम् ऊह्यम्† । ऊहस्तु भावत्वे सति समवेतं विशेषान्यद् निःसामान्यं‡ सामान्यमिति ॥

## विशेषस्तु सामान्यरहित एकव्यक्तिवृत्तिः ॥

विशेषलक्षणे एकव्यक्तिवृत्तिरित्युक्ते रसादावतिव्याप्तिस्तद्वारणाय सामान्यरहित इति । समवायादौ तद्वारणाय§ एकव्यक्तिवृत्तिरिति ॥

नन्वनेकव्यक्तिवृत्तेरपि सामान्यस्यैकव्यक्तिवृत्तित्वमस्त्येवेति तत्रातिव्याप्तिरिति चेत् सत्यम् । एकव्यक्तिमात्रनिर्दिष्टस्य तत्समवेतत्वस्य विवक्षितत्वाद् न दोषः ॥

## नित्यसंबन्धः समवायः ॥

समवायलक्षणे संयोगे ऽतिव्याप्तिवारणाय नित्येति । गगनादौ तद्वारणाय सम्बन्ध इति । न चात्माकाशयोः संयोगे ऽतिव्याप्तिः । तस्य नित्यत्वादिति वाच्यम् । अन्यतरकर्मणोरुभयकर्मणोस्तत्कारणयो॥रात्माकाशादावभावेन तयोः संयोगाभावात् । तस्य नित्यत्वे मानाभावात् । द्रव्यत्वेन संयोगसाधने विभागो ऽपि तेनैव सिध्येत् । तथा च तस्य संयोगस्य कुतो नित्यत्वमिति ॥

## प्रतियोगिज्ञानाधीनज्ञानो ऽभावः ॥

अभावं लक्षयति प्रतियोगीति । स्वाभावविरहात्मा प्रतियोगी । प्रतियोगिज्ञानाधीनं ज्ञानं यस्य स तथा । अधीनत्वं जन्यत्वम् । ज्ञानाधीनज्ञानो ऽभाव इत्युक्ते समवाये ऽतिव्याप्तिः । तस्यापि सम्बन्धिज्ञानाधीनज्ञानत्वात् । अत उक्तं प्रतियोगीति ॥

---

* सामान्यलक्षणमिति २ पु॰ पा॰ ।   † एतदग्रे इत्यभिप्राय इत्यधिकं २ पु॰ ।

‡ भावत्वे सति विशेषसमवायेतरत्वेःसामान्यमिति २ पु॰ पा॰ ।

§ अतिव्याप्तिवारणायेति २ पु॰ पा॰ ।   ॥ तत्कारणयोरिति नास्ति २ पु॰ ।

**पृथिवीत्वसामान्यवती पृथिवी । गन्धवती पृथिवी ॥**

इदानीमवान्तरभेदानुक्रमेण लक्षणान्याह पृथिवीत्वेत्यादिना । पृथ्वीत्वजातिव्यञ्जकमाह गन्धवतीति । गन्धवत्त्वं पृथिवीत्वस्य व्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । (ननु मणिवज्रादावव्याप्तिः । न । पाकजरूपेण तत्रापि गन्धवत्त्वानुमानात् । यद्वा)* मणिवज्रादिभस्मनि गन्धवत्त्वोपलम्भात् † तत्परमाणुषु गन्धवत्त्वमनुमीयते त एव वज्राद्यारम्भका इति तत्रापि गन्धवत्त्वसिद्धिः । न च जलादावतिव्याप्तिः । तत्र गन्धवत्त्वस्य चम्पकादिपार्थिवोपाधिनिमित्तत्वात् ॥

**अप्त्वजातिमत्य आपः । शीतस्पर्शवत्य आपः ॥**
**तेजस्त्वजातियोग्युष्णस्पर्शवत्तेजः ॥**

अथाप्त्वजातिव्यञ्जकमाह शीतस्पर्शेति । शीतस्पर्शवत्त्वम् अप्त्वव्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । तत्र स्पर्शवत्त्वं पृथिव्यादावतिव्यापकमत उक्तं शीतेति । शीता आप इत्युक्ते सामानाधिकरण्याद् गुणगुणिनोरभेदभ्रमः स्यात् तद्वारणाय स्पर्शेति । न च चन्द्रे ऽतिव्याप्तिः । तत्र हि चन्द्रमण्डलारम्भकावयवोपष्टम्भजलावयवगतं शैत्यं संयुक्तसमवायात् प्रतीयते न तु स्वाभाविकं शैत्यम् ‡ । न चोष्णोदके ऽव्याप्तिः । तत्रापि वह्निस्पर्शेन तस्याभिभवाद् बलवत्सजातीयसम्बन्धस्याभिभवत्वात् । एवं तेजोलक्षणे ऽपि § द्रष्टव्यम् । न च तेजोलक्षणं चन्द्रसुवर्णादौ अव्यापकम् । चन्द्रे जलस्पर्शाभिभूतस्य सुवर्णादौ पार्थिवस्पर्शाभिभूतस्योष्णस्पर्शस्य सत्त्वादिति ॥

**वायुत्वजातियोग्यरूपस्पर्शवान्वायुः ॥**

वायुत्वजातिव्यञ्जकमाह अरूपेति । अरूपस्पर्शवत्त्वं व्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । तत्र स्पर्शवत्त्वं तेजःप्रभृतिष्वतिव्याप्तमतो ऽरूपेति । अरूपत्वमाकाशादावतिव्यापकमतः स्पर्शवानिति ‖ ॥

---

* एतन्मध्यगतो ग्रन्थः १ पु॰ नास्ति । न च मणिवज्रादीति तत्र पा॰ ।
† गन्धोपलम्भादिति २ पु॰ पा॰ ।
‡ एतदग्रे–यथा जले गन्धवत्त्वं चम्पककुसुमसंयोगादिति इत्यधिकं २ पु॰ ।
§ अपिशब्दो नास्ति २ पु॰ ।   ‖ स्पर्शवच्चेति २ पु॰ ।

**शब्दगुणमाकाशम् ॥**

**आदित्यपरिवर्त्तनोत्पाद्यपरत्वाऽपरत्वाऽसमवायिकारणाधारः परत्वाऽपरत्वानधिकरणं कालः ॥**

**आदित्यसंयोगोत्पाद्यपरत्वाऽपरत्वाऽसमवायिकारणाधारः परत्वापरत्वानधिकरणं दिक् ॥**

आकाशादित्रयस्य जातेरभावादेकमेव* लक्षणमाह शब्देति। (आत्मादावतिव्याप्तिवारणाय शब्देति)†। शब्दवदित्युक्ते न कोपि दोषः। तथापि तस्य भाट्टमतसिद्धद्रव्यत्वनिरासेन गुणत्वसूचनाय गुणपदम्। शब्दो गुणः बहिरिन्द्रियव्यवस्थाहेतुत्वाद् रूपवद् इति शब्दस्य गुणत्वसिद्धिरित्यर्थः। आदित्यपरिवर्त्तनं सूर्यपरिस्पन्दस्तेन उत्पाद्ये परत्वापरत्वे तयोरसमवायिकारणं कालपिण्डसंयोगस्तदाधार इत्यर्थः। अनधिकरणं काल इत्युक्ते असम्भवः। कालस्यापि द्रव्यत्वाधिकरण‡त्वात्। यद्वा घटत्वाऽनधिकरणे पटे अतिव्याप्तिस्तत उक्तं परत्वापरत्वेति। तयोः पिण्डनिष्ठत्वेन कालस्य तदनधिकरणत्वमित्यर्थः। एतावत्युक्ते समवाये ऽतिव्याप्तिः तत आधार इति। एवं च कर्मण्यतिव्याप्तिः तदर्थं कारणेति। तथाप्यनिवृत्तिः§ तस्यापि ज्ञानकारणकर्मत्वाधारत्वात् ततोऽसमवायीति। कर्मणस्तु कर्मत्वाधारत्वे ऽप्यसमवायिकारणाधारत्वाभावान्न दोषः। असमवायीत्युक्ते गगनादावतिव्याप्तिः तत उक्तं परत्वेति। एतावत्युक्ते दिशि अतिव्याप्तिः। तत उक्तम् उत्पाद्येति। उत्पाद्याधार इत्युक्ते पिण्डे अतिव्याप्तिरतः परत्वेत्यादि‖। एतच्च परत्वगर्भितम् अपरत्वगर्भितं लक्षणद्वयं द्रष्टव्यम्। एवं दिग्लक्षणे ऽपि द्रष्टव्यम्¶। एतावांस्तु विशेषः। काले अतिव्याप्तिवारणायादित्यसंयोगानुत्पाद्येति ॥

**आत्मत्वसामान्यवान् बुद्धिगुण आत्मा ॥**

आत्मानं लक्षयति आत्मत्वेति। आत्मवृत्त्यवृत्त्यात्मवृत्त्यत्यन्ताभावाऽप्रतियोगिद्रव्यत्वान्यजातिरात्मत्वं सामान्यं तद्योगीत्यर्थः। आत्म-

---

* एकैकमेवेति २ पु॰ पा॰।
† ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰।
‡ द्रव्यत्वाद्यधिकरणेति २ पु॰ पा॰।
§ तथापि ततो ऽनिवृत्तिरिति २ पु॰ पा॰।
‖ अत उक्तम् आदित्यपरिवर्तनोत्पाद्येति। आधारान्तं पिण्डे ऽतिव्यापकमतो ऽग्रेतनं परत्वादिकमिति २ पु॰ पा॰।
¶ दिशो लक्षणमपि ज्ञेयमिति २ पु॰ पा॰।

त्वव्यञ्जकमाह बुद्धीति । बुद्धिर्गुणो यस्य तस्य भावस्तत्त्वं तच्चा*त्मव्यञ्जकमित्यर्थः । (यद्वा लक्षणान्तरम् । तत्र गुणाख्येत्युक्ते असम्भवः । गुणवानात्मेत्युक्ते गगनादौ गच्छति तद्वारणाय बुद्धीति) † । गुणेति ‡ स्पष्टार्थम् । अथ वा बुद्धि§रात्मेत्यभिदधद्बौद्धबुद्धिशुद्धये गुणपदम् । तथा सत्यात्मनो || ऽनित्यत्वप्रसङ्गाद् इति¶ । यद्वा गुणवदिति सामान्यलक्षणद्योतनार्थं गुणपदम् ॥

## मनस्त्वजातियोगि स्पर्शशून्यं क्रियाधिकरणं मनः ॥

मनसो लक्षणमाह मनस्त्वेति । गगनावृत्तिस्पर्शवत्त्वात्यन्ताभावाधिकरणक्रियावद्वृत्तिजातिर्मनस्त्वं तद्योगीत्यर्थः । मनस्त्वव्यञ्जकमाह स्पर्शेति । स्पर्शशून्यत्वे सति कर्माधारत्वं मनस्त्वव्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । तत्र घटादावतिव्याप्तिवारणाय स्पर्शेति । (गगनादिव्युदासाय क्रियाधिकरणत्वम्) ** । क्रियाधिकरणत्वं तु मनसो ऽणुत्वादेव सिद्धम् । अन्यथा मनसो†† विभुत्वे आत्मनो ऽपि विभुत्वात्ताभ्यां (सर्वपदार्थसम्बन्धेन ज्ञानयौगपद्यापत्तिः । बाह्येन्द्रियतद्विषयासम्बन्धान्नेति चेत् तर्हि तत्तद्विषयेन्द्रियाणां युगपत्संबन्धे ज्ञानयौगपद्यापत्तिः ।) ‡‡ दृष्टमेवैतद्दीर्घशष्कुलीभक्षणादौ इति चेन्न । व्यासङ्गस्थले क्रमदर्शनेन तत्रापि क्रमानुमानाद् यौगपद्यप्रतीतेर्भ्रान्तत्वात् । व्यासङ्गो नाम मनसो ऽन्यासक्तत्वम् । तत्र हि रूपादौ सकलविषयसम्बन्धे ऽपि शब्दं नाश्रौषं रूपं नाद्राक्षं गन्धं नान्वभवं स्पर्शं नास्पर्शीति सर्वानुभवाभावः स्यात् §§ । अणुत्वे तु येनेन्द्रियेण मनः सम्बध्यते तेनैव ज्ञानं जायते नान्येनेति युक्तो यौगपद्याभावः । अतः सिद्धं क्रियावत्त्वं मनसः ॥

---

* तच्चेति नास्ति २ पु॰ ।

† ( ) एतदन्तर्गतो ग्रन्थो नास्ति २ पु॰ ।

‡ गुणपदमिति २ पु॰ पा॰ ।

§ बुद्धिरेवेति २ पु॰ पा॰ ।

|| तस्या आत्मत्वे आत्मन इति २ पु॰ पा॰ ।

¶ इत्यनेन समसूचयदित्यधिकं २ पु॰ ।

** ( ) एतन्मध्यगग्रन्थस्थाने–स्पर्शशून्यत्वं गगनादावतिव्यापकमिति क्रियाधिकरणमिति २ पु॰ पा॰ ।

†† मनसो ऽपीत्यपिशब्दो ऽधिकः २ पु॰ ।

‡‡ ( ) एतन्मध्यगतग्रन्थस्थाने–ताभ्यां सर्वं सुखादिसाधनं सदा संबद्धमिति सुखदुःखयोर्युगपदुत्पत्तिः स्यात् । शरीरविषयाऽसंबन्धान्नेति चेत् शरीरविषयसम्बन्धे सति सकलेन्द्रियाणां तद्विषयसम्बन्धे च सति युगपत्सकलज्ञानानि स्युः । इति २ पु॰ पा॰ ।

§§ शब्दो मया श्रुतो रूपं मया दृष्टमिति धीर्न स्यादिति २ पु॰ पा॰ ।

**रूपत्वजातिमच्चक्षुर्मात्रग्राह्यो गुणो रूपम् ॥**

गुणावान्तरभेदानां* लक्षणानि दर्शयन् रूपं लक्षयति रूपत्वेति † ॥

एकं लक्षणमेकं तु जातिव्यञ्जकमिष्यते ।
एवं सर्वत्र विज्ञेयमथ वा लक्षणान्तरम् ॥

रसाऽवृत्तितैजसेन्द्रियमात्रग्राह्यगुणवृत्तिजाती रूपत्वं तद्योगीत्यर्थः ‡ । लक्षणपक्षे § गुण इत्युक्ते ‖ ऽतीन्द्रियधर्मादावतिव्याप्तिस्तद्वारणाय इन्द्रियग्राह्येति । ग्राह्यो गुणो रूपमित्युक्ते रसादौ अतिव्याप्तिः । तत उक्तं चक्षुर्ग्राह्य इति । एवमुक्ते संयोगादौ अतिप्रसक्तिः तत उक्तं मात्रेति । संयोगादेर्द्वीन्द्रियग्राह्यत्वान्न चक्षुर्मात्रग्राह्यत्वम् । रूपत्वे ऽतिप्रसङ्गवारणाय गुण इति । संपूर्णमपि लक्षणं प्रभाकुड्यसंयोगे अतिव्यापकं ततो विशेषगुण इति द्रष्टव्यम् ¶ । तथा च चक्षुर्मात्रग्राह्यो विशेषगुणो रूपमित्यर्थः । यद्वा चक्षुर्मात्रग्राह्यजातिमान् गुणो रूपमित्यर्थः । संयोगस्याऽतथात्वान्न संयोगे ऽतिप्रसङ्गः ॥

**रसत्वजातियोगी रसनग्राह्यो गुणो रसः ॥**

**गन्धत्वजातियोगी घ्राणग्राह्यो गुणो गन्धः ॥**

रूपाऽवृत्तिजलेन्द्रियग्राह्यगुणवृत्तिजाती रसत्वम् । रूपादौ अतिव्याप्तिवारणाय रसनेति । रसनया ग्राह्य इत्युक्ते रसत्वे अतिव्याप्तिस्तदर्थं गुण इति ॥

पार्थिवेन्द्रियग्राह्यवृत्तिस्पर्शाऽवृत्तिजातिर्गन्धत्वम् । रसादावतिप्रसङ्गवारणाय घ्राणेति । गन्धत्वे ऽतिप्रसङ्गवारणाय गुणेति ॥

**स्पर्शत्वजातियोगी स्पर्शनमात्रग्राह्यो गुणः स्पर्शः ॥**

स्पर्शं लक्षयति स्पर्शत्वेति । रूपत्वादिलक्षणतावच्छेदका**वच्छिन्नात्यन्ताभावाधिकरणविभुत्वाऽनधिकरणद्रव्यवृत्तिविशेषगुणत्वावान्तरजातिः स्पर्श-

---

* गुणानामवान्तरभेदानामिति २ पु॰ पा॰ । † रूपत्वेत्यादिनेति २ पु॰ पा॰ ।
‡ व्यावृत्त्यर्थं तु तत्र तत्रोच्यते इति २ पु॰ अधिकम् ।
§ लक्षणपक्षे इति २ पु॰ नास्ति ।
‖ गुणो रूपमित्युक्ते इति २ पु॰ पा॰ ।
¶ एतदग्रे–क्रमभङ्गापत्तेर्न सर्वमेकं लक्षणमित्यधिकं २ पु॰ ।
** रूपत्वलक्षणकावच्छेदकेत्यादिः पाठः १–२ पुस्तकयोः । उपरिस्थतः पाठः के॰ भ॰ शोधितः ।

त्वम् । जातिव्यञ्जकमाह स्पर्शनेति ( स्पर्शनमात्रग्राह्यगुणत्वं स्पर्शत्वव्यञ्जकमित्यर्थः । लक्षणपक्षे ऽपि स्पर्शनग्राह्यो गुणः संयोगो ऽपि भवति तद्वारणाय मात्रेति । स्पर्शनमात्रग्राह्यत्वं स्पर्शत्वजातावपीति तदर्थं गुण इति ) * । शेषं पूर्ववत् । एतेषु चतुर्ष्वपि लक्षणेषु तत्तदिन्द्रियग्राह्यगुणत्वावान्तरजातिमत्त्वं निष्कृष्टो ऽर्थः । तेन परमाणुरूपादिषु नाव्याप्तिः । चक्षुर्मात्रग्राह्यगुणत्वावान्तरजातिमद्रूपम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥

**संख्यात्वसामान्यवती संख्या । गणनाऽसाधारणकारणं संख्या ॥**

संख्यां लक्षयति संख्यात्वेति । गगनसमवेतवृत्तिसामान्यगुणवृत्तिद्विष्ठगुणमात्रा† ऽवृत्तिपरिमाणपृथक्त्वनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नगुणत्वसाक्षाद्व्याप्यजातिः संख्यात्वम् । जातिव्यञ्जकमाह गणनेति । कारणं संख्या इत्युक्ते साधारणकारणे ईश्वरेच्छादौ प्रसङ्गस्ततो ऽसाधारणेति । एतावत्युक्ते परिमाणादावतिप्रसङ्गस्ततो गणनेति । यत्सामान्ये सत्येव यत्सामान्यं जायते ऽसति च न जायते तत्तस्यासाधारणं कारणं यथा तन्तवः पटस्य । यथा कर्म संयोगादेः । तथा गणनां प्रति असाधारणं संख्या । ज्ञानं प्रति तु नासाधारणम् । संख्यां विना अन्यस्मादपि घटादेर्ज्ञायमानत्वात् । संख्याज्ञानं प्रति तु संख्याया असाधारणत्वे ऽपि तस्या गणनां प्रति असाधारणत्वं न व्याहन्यते । उक्तलक्षणसत्त्वात् । न हि घटस्य रूपादिचतुर्दशगुणान्प्रति असाधारणकारणत्वे ऽपि प्रत्येकमसाधारणत्वं व्याहन्यते । न हि घटः साधारणकारणमेवेति व्यवहरन्ति परीक्षकाः । किं तु ईश्वरेच्छादीनां साधारणत्वम् । तेषां सदा सत्त्वे ऽपि तन्त्वादिकं विना विशेषघटकार्यानुदयात् । तस्मात्स्वज्ञानं प्रति हेतुत्वे ऽपि गणनासाधारणकारणत्वं न व्याहन्यते संख्याया इति सिद्धम् ॥

**परिमाणत्वजातियोगि मानव्यहाराऽसाधारणकारणं परिमाणम् ॥**

---

* ( ) एतन्मध्यगग्रन्थस्थाने–गन्धादिप्रसक्तिवारणाय स्पर्शनेति । स्पर्शनग्राह्यत्वं घटे ऽप्यस्तीति तद्वारणाय गुणेति । स्पर्शनग्राह्यो गुणः संयोगो ऽपीति तद्वारणाय मात्रेति । स्पर्शनग्राह्यत्वं स्पर्शत्वजातावपीति तदपनोदाय गुण इति । इति २ पु॰ पा॰ । † मात्रशब्दो नास्ति २ पु॰ ।

परिमाणं लक्षयति परिमाणत्वेति । संख्यासमवायिकारणकवृत्त्यपेक्षा-बुद्ध्यसाधारणकारणकावृत्तिगुणत्वसाक्षाद्व्याप्यजातिः परिमाणत्वम् । जाति-व्यञ्जकमाह मानेति । मानमियत्ता । लक्षणपक्षे व्याख्यानं पूर्ववत् ॥

**पृथक्त्वजातियोगि पृथग्व्यवहाराऽसाधारण-कारणं पृथक्त्वम् ॥**

पृथक्त्वं लक्षयति पृथक्त्वेति । अपेक्षाबुद्ध्यसाधारणकारणसमयवृत्ति-गुणवृत्त्यत्यन्ताभावाऽप्रतियोगिसंख्याऽवृत्तिजातिः पृथक्त्वत्वम् । तद्व्यञ्जकमाह पृथगिति । पृथग्व्यवहार * इदमस्मात् पृथग् इत्येवंरूपः ॥

**संयोगत्वसामान्यवाननित्यसंबन्धः संयोगः ॥**

संयोगं लक्षयति संयोगत्वेति । द्रव्यासमवायिकारणगुणवृत्त्यत्यन्ता-भावाऽप्रतियोगिगुणत्वावान्तरजातिः संयोगत्वम् । तद्व्यञ्जकमाह अनि-त्येति । लक्षणपक्षे समवाये अतिव्याप्तिवारणाय अनित्यपदम् । रूपादौ तद्वारणाय† सम्बन्धपदम् ॥

**विभागत्वसामान्यवान् विभक्तप्रत्ययाऽसाधार-णकारणं विभागः ॥**

विभागं लक्षयति विभागत्वेति । क्रियाऽसमवायिकारणद्विष्ठगुणवृत्ति-संयोगावृत्तिगुणत्वसाक्षाद्व्याप्यजातिर्विभागत्वम् । विभक्तव्यवहार इदमस्माद् विभक्तमिति प्रत्यय‡व्यपदेशः ॥

**परत्वत्वसामान्यवत् परव्यवहाराऽसाधारणका-रणं परत्वम् ॥**

**अपरत्वत्वसामान्ययोग्यपरव्यहाराऽसाधारण-कारणमपरत्वम् ॥**

परत्वापरत्वे लक्षयति परत्वेति । अपरत्वगुणावृत्तिसकलपरत्ववृत्ति-जातिः परत्वत्वम् । परत्वाऽवृत्तिसकलापरत्ववृत्तिजातिरपरत्वत्वम् । परापर-

---

* पृथक्त्वव्यवहार इति १ पु॰ पा॰ ।

† रूपादौ अतिव्याप्तिवारणायेति २ पु॰ पा॰ ।

‡ विभक्तमिति रूपेति २ पु॰ पा॰ ।

व्यवहारौ वृद्धतरुणादौ संनिकृष्टविप्रकृष्टयोश्च परापरव्यपदेशौ * । (लक्षणपक्षे व्यावृत्तिः पूर्ववत्) † ॥

## बुद्धित्वसामान्यवती आत्माश्रयः प्रकाशो बुद्धिः ॥

बुद्धिं लक्षयति बुद्धित्वेति । सुखाद्यवृत्ति‡सकलबुद्धिवृत्तिजातिर्बुद्धित्वम् । एवमुत्तरत्रापि जातय ऊहनीयाः § । (लक्षणपक्षे) ‖ आत्माश्रय इत्युक्ते सुखादावतिव्याप्तिवारणायाह ¶ प्रकाशेति । वह्न्यादिप्रकाशे तद्वारणाय** आत्माश्रय इति ॥

## सुखत्वसामान्यवन्निरुपाध्यनुकूलवेद्यं सुखम् ॥

(सुखं लक्षयति सुखत्वेति । लक्षणपक्षे) ††वेद्यं सुखमित्युक्ते दुःखतत्साधनादौ प्रसङ्गस्तदर्थमनुकूलेति । एवं सति सुखसाधने प्रसङ्गस्तदर्थं निरुपाधीति । (निरुपाधित्वमनन्यद्वारकत्वं सुखसाधनं तु सुखद्वारेणैवानुकूलमिति नातिव्याप्तिः) ‡‡ न हि चन्दनं निदाघे सुखसाधनमिति हेमन्तशिशिरयोः शीतार्तेनानुलिप्यते §§ ॥

## दुःखत्वसामान्यवन्निरुपाधिप्रतिकूलवेद्यं दुःखम् ॥

(दुःखं लक्षयति दुःखत्वेति । लक्षणपक्षे सुखादावतिव्याप्तिवारणाय प्रतिकूलेति) ‖‖ । दुःखसाधने अहिकण्टकादौ तद्वारणाय निरुपाधीति । (दुःखसाधनं दुःखद्वारेण प्रतिकूलमिति न तत्र प्रसङ्गः) ¶¶ । विषवैद्यैः सर्पादेरपि गृह्यमाणत्वात् (तेषां तस्य प्रतिकूलत्वाऽदर्शनाद् इति) *** ॥

---

* पराऽपरप्रत्ययशब्दप्रयोगौ इति २ पु॰ पा॰ ।

† ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ । ‡ सुखाऽवृत्तीति १ पु॰ पा॰ ।

§ ऊह्या इति २ पु॰ पा॰ । ‖ ( ) एतन्मध्यगो ग्रन्थः २ पु॰ नास्ति ।

¶ आत्माश्रयत्वं सुखादावतिव्याप्तमत आहेति २ पु॰ पा॰ ।

** अतिप्रसङ्गवारणायेति २ पु॰ पा॰ । †† ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ ।

‡‡ निरुपाधित्वं स्वभावत इष्यमाणत्वम् । सुखसाधनं तु सुखार्थत्वेनैव इष्यते न तु स्वरूपतः । इति ( ) एतच्चिन्हमध्यस्थग्रन्थस्थाने पाठः । २ पु॰ ।

§§ एतदग्रे–ततः सुखार्थत्वेनैव तस्येष्यमाणत्वं न स्वभावत इति न तत्र प्रसङ्गः । सुखं तु जायमानं सत्स्वभावत एवानुकूलवेद्यमिति । इत्यधिकं २ पु॰ ।

‖‖ ( ) एतन्मध्यस्थो ग्रन्थस्त्रुटितः २ पु॰ ।

¶¶ ( ) एतन्मध्यगतग्रन्थस्थाने–अत्र निरुपाधित्वं स्वभावतोऽनिष्यमाणत्वम् । दुःखसाधनं तद्धेतुत्वादेवेष्यते न तु स्वभावत इतीति २ पु॰ पाठः ।

*** ( ) एतन्मध्यस्थग्रन्थस्थाने–अतो निरुपाधिप्रतिकूलवेद्यत्वं नातिप्रसक्तम् । शेषं पूर्ववत् । इति पाठः २ पु॰ ।

**इच्छात्वसामान्यवत्यर्थित्वलक्षणेच्छा ॥**

**द्वेषत्वजातिमान् प्रज्वलनात्मको द्वेषः ॥**

**प्रयत्नत्वसामान्यवान्प्रयत्नव्यवहाराऽसाधारण-कारणं प्रयत्नः ॥**

( इच्छां लक्षयति इच्छा चेति ) * अर्थयते प्रार्थयते इत्यर्थी ग्रह्यादित्वाण्णिनिः । तस्य भावो ऽर्थित्वं प्रार्थनेति यावत् । तदेव लक्षणं स्वरूपं यस्याः सा तथा । स्पष्टम् ॥

प्रज्वलयतीति प्रज्वलनः । स एव आत्मा स्वरूपं यस्य स तथा क्रोधरूप इत्यर्थः । प्रज्वलनात्मकत्वं यथाश्रुतं वह्न्यादावप्यस्तीति गुणप्रकरणाद् गुणपदं सम्बन्धनीयम् । यद्वा आत्मगुणप्रकरणाद् † आत्माश्रय इति सम्बन्धनीयमिति ॥

प्रयत्नं लक्षयति प्रयत्नत्वेति । अहं प्रयते अहं करोमीत्यादिव्यवहारः प्रयत्नव्यवहारः । शेषं सुगमम् ॥

**गुरुत्वत्वजातिमदेकवृत्त्याद्यपतनाऽसमवायिकारणं गुरुत्वम् ॥**

कारणं गुरुत्वमित्युक्ते अदृष्टादौ अतिव्याप्तिस्तदर्थमसमवायीति । एवमुक्ते ऽपि संयोगादौ प्रसङ्गः तत उक्तं पतनेति । पतनं नाम अधःसंयोगफलिका क्रिया । तस्या असमवायिकारणमित्यर्थः । तावत्युक्ते‡ ( द्वितीयपतनाऽसमवायिकारणे विभागे ) § नोदनाभिघातादिसंयोगे पतनहेतावतिव्याप्तिस्तत उक्तम् एकवृत्तीति । एकवृत्तित्वं ( रूपादावप्यस्तीति पतनेत्यादि ) || एकवृत्तिपतनकारणमित्युक्ते अदृष्टादौ ततो ऽसमवायीति ॥

**द्रवत्वत्वजातिमदेकवृत्तिस्यन्दनाऽसमवायिकारणं द्रवत्वम् ॥**

---

* ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ । † आत्मगुणलक्षणप्रकरणात्वादिति २ पु॰ पा॰ ।

‡ तावत्युक्ते इति १ पु॰ नास्ति । § ( ) एतन्मध्यगो ग्रन्थो नास्ति १ पु॰ । २ पुस्तकगतो ऽयं ग्रन्थो ऽप्यसंगत इव लक्ष्यते । तत्र विभागे इत्येतदग्रे–अतिव्याप्तिस्तत आद्येतीति पूरणे समञ्जसो ग्रन्थः स्यादिति भाति । विभागे इत्यस्य स्थाने–वेगे इति पाठः समीचीनतरः ।

|| ( ) एतदन्तरालगतग्रन्थस्थाने–विशेषादावतिप्रसक्तं ततो ऽसमवायीति । एवमुक्ते कर्मणि अतिव्याप्तिवारणाय पतनेति । इति पाठः २ पु॰ ।

द्रवत्वं लक्षयति द्रवत्वत्वेति *। रूपवद्वृत्तिगगनावृत्त्यपेक्षाबुद्धजन्यसामान्यगुणवृत्ति†गुरुत्वान्यगुणत्वावान्तरजातिर्द्रवत्वत्वम् । लक्षणपक्षे रूपादावतिव्याप्तिवारणाय स्यन्दनेति । स्यन्दनं प्रस्रवणम् । एतावत्युक्ते संयोगादौ तदर्थमेकवृत्तीति ‡ । एकवृत्ति च तत् स्यन्दनासमवायिकारणं चेति विग्रहः ॥

**स्नेहत्वसामान्यवान् द्रवत्वत्वशून्यः संग्रहासाधारणकारणं स्नेहः ॥**

स्नेहं लक्षयति स्नेहत्वेति । लक्षणपक्षे द्रवत्वे अतिव्याप्तिस्ततो द्रवत्वत्वशून्य इति। इत्युक्ते रूपादौ प्रसङ्गः तत उक्तं संग्रहेति §। संग्रहो नाम चूर्णादेः पिण्डीभावः । अदृष्टादावतिव्याप्तिवारणायासाधारणेति ॥

**संस्कारत्वजातिमान् स्वोत्पत्त्यवस्थापादको गुणः संस्कारः ॥**

संस्कारं लक्षयति संस्कारत्वेति । स्वस्य संस्कारस्योत्पत्तौ द्रव्यस्य या अवस्था तस्या आपादकः । संस्कारो हि वेगभावनास्थितिस्थापकरूपस्त्रिविधोऽपि स्वोत्पत्तिसमयावस्थां द्रव्यस्य प्रतिपादयति । तत्र वेगश्चलनावस्थां भावना ज्ञानवत्त्वावस्थां‖ स्थितिस्थापको वेष्टनाद्यवस्थां प्रतिपादयतीत्यर्थः । संस्कारोत्पत्त्यवस्थापादकत्वं तदाधारद्रव्यस्याप्यस्तीति तद्वारणाय गुण इति । गुणः संस्कार इत्युक्ते पारिमाण्डल्ये ऽतिप्रसङ्गः तदर्थमापादक इति । आपादकत्वं कारणत्वम् । पारिमाण्डल्यं परमाणुपरिमाणम् । तच्च न कारणमिति न दोषो भवति । एवमुक्ते पटादिस्वरूपापादके तन्तुसंयोगादावतिव्याप्तिस्तदर्थमवस्थेति । एवमपि संयुक्तत्वावस्थापादके संयोगे अतिव्याप्तिस्तदर्थमुत्पत्तीति । एवमपि रूपादावतिव्याप्तिरतः स्वेति ॥

**धर्मत्वसामान्यवान्सुखासाधारणकारणं धर्मः ॥**

**अधर्मत्वसामान्यवान् दुःखासाधारणकारणमधर्मः ॥**

---

* द्रवत्वत्वेतीति नास्ति २ पु॰ ।

† रूपव्यापकावृत्तिगगनवृत्त्यपेक्षाबुद्धिजन्यावृत्तिसामान्यगुणवृत्तीति २ पु॰ पा॰ ।

‡ द्वितीयादिस्यन्दनहेतौ विभागे ऽतिव्याप्तिस्तत एकेतीति २ पु॰ पा॰ ।

§ द्रवत्वशून्य इत्युक्ते गगनादावतिव्याप्तिरतः संग्रहेतीति २-३ पु॰ पा॰ ।

‖ ज्ञानावस्थामिति २ पु॰ पा॰ ।

(धर्मं लक्षयति धर्मत्वेति। अधर्मं लक्षयति अधर्मत्वेति। लक्षणपक्षे)* अधर्मेऽतिव्याप्तिवारणाय सुखेति†। आत्मादिवारणाय असाधारणेति॥

**शब्दत्वसामान्ययोगी श्रोत्रग्राह्यो गुणः शब्दः॥**

शब्दं लक्षयति शब्दत्वेति। गगनवृत्तिविशेषगुणवृत्तिरूपाऽवृत्तिजातिः शब्दत्वम्। ‡ लक्षणपक्षे सुखादावतिव्याप्तिवारणाय श्रोत्रग्राह्य इति। श्रोत्रग्राह्यत्वं शब्दत्वेऽप्यस्तीति गुण इति §। गुणत्वे प्रमाणमुक्तमेव ‖॥

**उत्क्षेपणत्वजातिमदूर्ध्वदेशसंयोगकारणं कर्मोत्क्षेपणम्॥**

**अपक्षेपणत्वजातिमदधोदेशसंयोगकारणं कर्मापक्षेपणम्॥**

**आकुञ्चनत्वजातिमद्वक्रत्वापादकं कर्माकुञ्चनम्॥**

**प्रसारणत्वजातिमदृजुत्वापादकं कर्म प्रसारणम्॥**

**गमनत्वजातिमदनियतदेशसंयोगकारणं कर्म गमनम्॥**

कर्मावान्तरभेदान् लक्षयति उत्क्षेपणत्वेति। ऊर्द्ध्वदेशसंयोगहेतुक्रियावृत्तिकर्मत्वावान्तरजातिरुत्क्षेपणत्वम्। एवमुत्तरत्राप्यूह्यम्। अपक्षेपणादावतिव्याप्तिवारणाय ऊर्द्ध्वदेशसंयोगेति। कारणमित्युक्ते ऽपक्षेपणाधारे द्रव्ये अतिव्याप्तिस्ततः कर्मेति। अपक्षेपणादौ तद्वारणाय वक्रत्वेति। आकुञ्चनाधारे तद्वारणाय कर्मेति। इतरत्र कर्मण्यतिव्याप्तिवारणाय ऋजुत्वेति। शेषं पूर्ववत्। अन्यत्र कर्मण्यतिव्याप्तिवारणाय अनियतदेशसंयोगेति। शेषं सुगमम्॥

**व्यापकमात्रं सामान्यं परम्॥**

**व्याप्यमात्रं सामान्यमपरम्॥**

**व्याप्यव्यापकोभयरूपं सामान्यं परापरम्॥**

---

* ( ) एतदन्तर्गतो ग्रन्थो नास्ति २ पु॰। † धर्मेऽतिव्याप्तिवारणाय दुःखेति १ पु॰ पा॰।

‡ एतदग्रे-अतीन्द्रियभावादौ प्रसङ्गवारणाय ग्राह्येति इति २ पु॰ अधिकम्।

§ गुणपदमिति ३ पु॰ पा॰।

‖ एतदग्रे-इति मितभाषिण्यां गुणपदार्थः समाप्त इति ३ पु॰ अधिकम्।

सामान्यभेदस्य लक्षणमाह व्यापकेति । अपरसामान्यादावतिव्याप्तिवारणाय व्यापकेति । व्यापकमात्रं परमित्युक्ते गगनादावतिव्याप्तिवारणाय सामान्यमिति । व्यापकं सामान्यं परमित्युक्ते परापरे ऽतिव्याप्तिस्ततो मात्रमिति * । व्याप्यमात्रमित्युक्ते असंभवस्तदर्थं सामान्यमिति । व्याप्यव्यापकमित्युक्ते वह्न्यादावतिव्याप्तिरत उक्तं सामान्यमिति । शेषं सुगमम् ॥

**अनादिः सान्तः प्रागभावः ॥**

**सादिरनन्तः प्रध्वंसाभावः ॥**

**अनादिरनन्तः संसर्गाभावोत्यन्ताभावः ॥**

**तादात्म्यनिषेधो ऽन्योन्याभावः ॥**

विशेषसमवाययोरवान्तरभेदाभावादभावभेदान् लक्षयति अनादिरिति । गगनादावतिव्याप्तिपरिहाराय सान्त इति । घटादावतिव्याप्तिवारणायानादिरिति । रूपादावतिव्याप्तिवारणाय अनन्त इति । (आत्मादावतिव्याप्तिवारणाय सादिरिति । अन्योन्याभावे ऽतिव्याप्तिवारणाय संसर्गेति । प्रागभावप्रध्वंसाभावयोरतिव्याप्तिनिवारणार्थमनादिरनन्त इति । अनादिरनन्तोत्यन्ताभाव इत्युक्ते पुनरन्योन्याभावे प्रसङ्गस्ततः संसर्गेति । अन्योन्याभावो ऽत्र नित्यानां विवक्षितः । अनित्यान्योन्याभावस्योत्पत्तिविनाशयोर्वक्ष्यमाणत्वाद् नातिव्याप्तिः ) † । निषेध इत्युक्ते प्रागभावादावतिव्याप्तिवारणायोक्तं तादात्म्येति । घटः पटो न भवतीति घटे पटतादात्म्यमारोप्य निषिध्यते इति तादात्म्यनिषेध ‡ इत्यर्थः ॥

**नित्यत्वं प्रध्वंसविरहः ॥**

**अनित्यत्वं प्रध्वंसवत्त्वम् ॥**

**निरवयवः क्रियावान् परमाणुः ॥**

नित्या परमाणुरूपेत्यत्र नित्यत्वं लक्षयति नित्यत्वमिति । विरहो नित्यत्वमित्युक्ते नित्यत्वविरहे ऽनित्यत्वे ऽतिव्याप्तिः अत उक्तं प्रध्वं-

---

* अतो मात्रपदमिति २ पु· पा· ।

† ( ) एतन्मध्यगो ग्रन्थस्त्रुटितः १ पु· । ३ पुस्तके तु एतन्मध्यगो-ऽनादिरित्यादिसंसर्गेतीत्येतदन्त एव दृश्यते ।

‡ प्रतिषेध इति २ पु· पा· ।

सेति । (प्रध्वंसवत्त्वं तत्प्रतियोगित्वं प्रध्वंसोपलक्षितसत्तायोगित्वं चेत्यर्थः । परमाणुं लक्षयति निरवयव इति) * । द्व्यणुकादावतिव्याप्तिवारणाय निरवयव इति † । गगने तद्वारणाय क्रियावानिति । मनसोऽप्यणुपरिमाणत्वेन लक्ष्यत्वान्नातिव्याप्तिः । यद्वा मनोलक्षणे स्पर्शशून्यत्वेन विशेषणादत्र स्पर्शवत्त्वं विवक्षितम् ॥

**द्रव्यसमवायिकारणमवयवः ॥**

**द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि ॥**

निरवयवत्वस्यावयवनिरूप्यत्वादवयवं लक्षयति द्रव्येति । अन्त्यावयविनि घटादावतिव्याप्तिवारणाय द्रव्येति । द्रव्यकारणमित्युक्ते ईश्वरादैा अतिप्रसङ्गः ‡ ततः समवायीति । शेषं सुगमम् ॥

शरीरलक्षणे ऽन्त्यावयविज्ञानाय § तल्लक्षणमाह द्रव्येति । यद्यप्युद्देशानन्तरं लक्षणस्य वक्तव्यत्वात् शरीरलक्षणानन्तरं भोगादिवदन्त्यावयवी लक्षयितुमुचितस्तथाप्यत्र द्रव्यपदव्यवच्छेद्यत्वेन प्राप्तत्वाद् देहलीप्रदीपन्यायेनोभयत्रोपकार्यतया ऽत्रैव लक्षित ‖ इत्यदोषः । द्रव्यमन्त्यावयवीत्युक्ते परमाण्वादावतिव्याप्तिस्ततः कार्येति । एवमुक्ते द्व्यणुकादैा प्रसङ्गस्ततो ऽनारम्भकमिति । एवं चासम्भवः । अन्त्यावयविनां शरीरादीनां स्वगतरूपादेरारम्भकत्वात् । ततो द्रव्येति । द्रव्याऽनारम्भकमित्युक्ते रूपादैा ततो द्रव्यमिति । द्रव्यानारम्भकं द्रव्यमित्युक्ते गगनादैा ततः कार्येति ॥

**प्रागभाववत्कार्यम् ॥**

**भोगायतनमन्त्यावयवि शरीरम् ॥**

(कार्यं लक्षयति) ¶ । प्रागभाववदिति । प्रागभावप्रतियोगि कार्यमित्यर्थः । अन्यथा कार्यैात्पत्त्यनन्तरं प्रागभावाभावात् प्रागभाववत्त्वमसम्भवि

---

* ( ) एतदन्तरस्थो ग्रन्थस्त्रुटितः २ पु॰ । प्रध्वंसे ऽतिव्याप्तिवारणाय विरह इतीत्येतत्पूर्वमधिकं ३ पु॰ ।

† घटे ऽतिव्याप्तिवारणार्थं निरवयव इति २–३ पु॰ पा॰ ।

‡ द्रव्यकारणमितीश्वरादैा अतिप्रसक्तमिति २ पु॰ पा॰ ।

§ अन्त्यावयविपदज्ञानायेति २ पु॰ पा॰ ।

‖ लक्ष्य इति १ पु॰ पा॰ ।

¶ ( ) एतदन्तर्गतो ग्रन्थो नास्ति २ पु॰ ।

स्यादिति भोगेति । भोगस्य वक्ष्यमाणलक्षणस्यायतनमन्त्यावयवि तच्छरीरमित्यर्थः । अन्त्यावयवि शरीरमित्युक्ते घटे अतिव्याप्तिः । तदर्थमायतनमिति । एवमप्यनिवृत्तिस्तस्यापि किंचिदायतनत्वादत उक्तं भोगेति । यदा तु वक्ष्यमाणलक्षणानुसार्यायतनशब्दः तदा तेनैव व्यावृत्तिसिद्धेर्भोगपदं स्वरूपकथनायैव । यदा त्वायतनपदमाधारमात्रवाचि तदा सार्थकमिति मन्तव्यम् । अथ वा वक्ष्यमाणं लक्षणं भोगायतनस्य लक्षणं नायतनमात्रस्येति भोगपदं सार्थकम् । भोगायतनमित्येतावत्युक्ते मनस्यतिव्याप्तिस्तदवच्छिन्ने आत्मनि भोगजननात् तत उक्तमवयवीति । एवं च हस्तादावतिव्याप्तिस्तत उक्तमन्त्येति ॥

## स्वसमवेतसुखदुःखान्यतरसाक्षात्कारो भोगः ॥

भोगलक्षणमाह स्वेति । स्वस्मिन्भोक्तरि समवेते ये सुखदुःखे तयोरन्यतरस्य सुखस्य दुःखस्य वा यः साक्षात्कारः स भोग इत्यर्थः । साक्षात्कारो भोग इत्युक्ते घटसाक्षात्कारोऽपि भोगः स्यात् । सुखदुःखयोर्युगपत्साक्षात्कारासंभवात् क्रमेण तयोः साक्षात्कारे अननुगमः उभयत्रानुगतस्य धर्मस्यैकस्याभावाद् अत उक्तमन्यतरेति । अन्यतरत्वं तदन्यान्यत्वम् उभयत्रानुगतमित्यर्थः । सुखदुःखान्यतरसाक्षात्कारो भोग इत्युक्ते ईश्वरसाक्षात्कारे । अतः स्वसमवेतेति । ईश्वरस्य शरीराद्यभावेन तज्जन्यादृष्टाभावात् तदधीनयोः स्वसमवेतयोः सुखदुःखयोरभावाद् न तत्साक्षात्कार ईश्वरस्येत्याशयः ॥

## यदवच्छिन्ने आत्मनि भोगस्तदायतनम् ॥

आयतनस्य लक्षणमाह यदवच्छिन्ने इति । येन शरीरादिना अवच्छिन्ने संबद्धे आत्मनि भोगो जायते तच्छरीराद्यायतनमित्यर्थः । आत्मन्यतिव्याप्तिवारणाय यदवच्छिन्ने इति । शरीराद्यवच्छिन्ने ऽन्यत्र भोगाभावादसम्भवमाशङ्क्य आत्मनीति ॥

## साक्षात्कारिज्ञानकरणमिन्द्रियम् ॥

## आत्मनो भोगकारणं विषयः ॥

इन्द्रियं लक्षयति साक्षात्कारीति । साक्षात्करोति तत्साक्षात्कारि तद् ज्ञानं च तस्य करणं साधकतममित्यर्थः । करणमिन्द्रियमित्युक्ते छिदिक्रियाकरणे कुठारादावतिव्याप्तिरतो ज्ञानेति । एवं धूमादिलिङ्गे अतः साक्षात्कारीति । साक्षात्कारिणः करणमित्युक्ते न कोपि दोषः । तथापि साक्षात्कारित्वं* धर्मो विषयनिष्ठो न ज्ञाननिष्ठ इति मतं निरसितुं ज्ञानसामानाधिकरण्यनिर्देश इति मन्तव्यम् । निरासस्तु साक्षात्त्वस्य विषयनिष्ठत्वे घटं साक्षात्करोमीति ज्ञानगतत्वेनानुभवो न स्याद् व्यवसायस्यैवैतदाकारप्रसङ्गाच्चेति । (व्यवसायज्ञानस्य साक्षात्त्वं साध्यते नाव्यवसायस्य तस्याविषयत्वात्) † । यद्वा साक्षात्कारिपदस्य व्युत्पत्त्या चक्षुरादौ अतिव्याप्तिवारणाय ज्ञानपदम् । भोगकारणं विषय इत्युक्ते आत्मनि अतिव्याप्तिरत उक्तमात्मन इति । आत्मनः सम्बन्धी यो भोगः तस्य कारणमित्यर्थः । तथा चात्मातिरिक्तं कारणं प्रतीयते । यथा राज्ञो धनस्वामी भद्रसेन इत्युक्ते राजातिरिक्तः प्रतीयते तदीयधनस्वामी तद्वदित्यर्थः । एवमपीश्वरादौ दोषप्रसङ्गः । ततो ऽसाधारणेति द्रष्टव्यम् । ज्ञायमानेति पाठे इन्द्रियादौ प्रसङ्गवारणाय तद्विशेषणम् । ईश्वरादेरप्यनेनैव व्यावृत्तिस्तदा । गन्धवत्त्वे सति आत्मनो भोगकारणं पार्थिवो विषयः । स्नेहवत्त्वे सत्यात्मनो भोगकारणमप्याप्यो विषय इत्यादि स्वयमूहनीयम् ॥

**पार्थिवमात्रेन्धनं तेजो भौमम् । जलमात्रेन्धनं तेजो दिव्यम् । पार्थिवजलेन्धनं तेज औदर्यम् । निरिन्धनं तेज आकरजम् । तच्च सुवर्णादि ॥**

तैजसानां विषयभेदानां लक्षणमाह पार्थिवेति । दिव्यादावतिव्याप्तिवारणाय पार्थिवेन्धनमिति । इन्धनं दीपनम् ‡ । एवं चौदर्ये अतिव्याप्तिरतो मात्रेति । तस्य चाशितपीताद्युभयेन्धनत्वान्न दोषः । तेजःपदाभावे निषादस्थपतिन्यायेन § कर्मधारय एव स्यात् तथा चासम्भवः । ततो बहुव्रीहिसमासज्ञापनाय तेजःपदम् ॥

---

* साक्षात्त्वं धर्म इति २ पु॰ पा॰ । † ( ) एतदन्तर्गतो ग्रन्थो नास्ति २ पु॰ ।
‡ दीपकमिति २ पु॰ पा॰ । § जैमिनिसूत्र॰ ६ अ॰ १ पा॰ १३ अधिकरणं ५१–५२ सू॰ ।

(निषादस्थपतिन्यायस्त्वेवम्)* । एतया निषादस्थपतिं याजयेदिति श्रूयते । तत्र सन्देहः । निषादानां स्थपतिं स्वामिनमिति षष्ठीतत्पुरुष उत निषादं च तं स्थपतिं चेति कर्मधारय इति । तत्र पूर्वपक्षः । षष्ठीसमास एवेति । तथा च निषादानां स्थपतिः स्वामी कश्चित्प्राप्तविद्यो ब्राह्मणादिर्याजनीयः स च कर्मण्यधिकारी । अर्थित्वात्समर्थत्वाद् विद्वत्वाच्च । (अपर्युदस्तत्वाच्च †) कर्मधारये त्वनधीतवेदः शूद्रोऽधिकारी वाच्यः । तच्चायुक्तम् । अपशूद्राधिकरण‡विरोधादिति प्राप्ते प्रत्युच्यते । षष्ठीसमासाश्रयणे षष्ठ्यर्थलक्षणापत्तिः । लक्षणा हि जघन्या वृत्तिः । न च लुप्ता षष्ठी बोधयिष्यति । लोपस्याभावरूपतयाऽबोधकत्वात् । कर्मधारये तु न लक्षणा । द्वितीयायाः श्रूयमाणत्वात् । समानाधिकरणश्रुतेर्बलीयस्त्वात् । प्रथमपदस्योपरि तत्रापि विभक्तिः न श्रुतेति चेद् न । अभेदे हि विशेषणविशेष्ययोरेकैव विभक्तिः । सा च श्रूयमाणा उभयत्र संबद्ध्यते । अतो नाश्रुतविभक्तिः कल्पनीया§ कर्मधारये । त्वन्मतेऽश्रुता षष्ठी कल्पनीया । अतो गौरवम् । न चाध्ययनाभावादनधिकारो निषादस्य । एतद्विधिबलादेव एतदिष्टौ यावदपेक्ष्यते तावत्पठनानुज्ञानात् । यथा वर्षासु रथकारोऽग्नीनादधीतेत्यत्र । न चापशूद्राधिकरणविरोधः । तस्य स्थपतिनिषादव्यतिरिक्तविषयत्वेनापि पर्यवसानात् । सामान्याद्विशेषस्य बलीयस्त्वात् । तस्मात्कर्मधारयबलात् स्थपतिनिषाद एवानयेष्ट्या|| यजेतेति सिद्धम् । याजनस्य वृत्तित्वेन प्राप्तत्वाद् याजयेदिति विभक्तिविपरिणामात् ॥

तेजो दिव्यमित्युक्ते भौमादावतिव्याप्तिरतो जलेन्धनमिति । एवं चौदर्ये अतो मात्रेति । शेषं पूर्ववत् । पूर्वोक्तयोरुभयोरतिव्याप्तिवारणाय पार्थिवजलेन्धनमिति । सुगममन्यत् । तेज आकरजमित्युक्ते अन्यत्रातिव्याप्तिवारणाय निरिन्धनमिति । आकरजस्वरूपमाह तच्चेति । आदिपदाद्रजतताम्रकांस्यत्रपुसीसादयो ग्राह्याः ॥

## सकलकारण¶यौगपद्यमुत्पत्तिः ॥

* ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ । † ( ) अयं ग्रन्थो नास्ति १ पु॰ ।

‡ जैमिनिसूत्र ६ अ॰ १ पा॰ ७ अधिकरणं २५ सूत्रात् ३८ सू॰ पर्यन्तम् ।

§ विभक्तिकल्पनापात इति २-३ पु॰ पा॰ ।

|| रौद्रेष्ट्येति २-३ पु॰ पा॰ । ¶ सकलकार्येति २ पु॰ पा॰ ।

**अनेकेषामेकक्षणसंबन्धो यौगपद्यम् ॥**

**विभागानुत्पाद्यविभागप्रागभावसम्बद्धकर्मावच्छिन्नः कालः क्षणः ॥**

**तन्मात्रावस्थायि क्षणिकम् ॥**

औपाधिककालभेदस्य लक्षणमाह सकलेति । ननु यौगपद्यमुत्पत्तिरित्युक्ते घटपटयौगपद्यमुत्पत्तिः स्याद् अत उक्तं कारणेति । द्वित्राणां कारणानां मेलने अतिव्याप्तिवारणाय सकलेति । ननु यौगपद्यं कथमुत्पत्तिः । तदनन्तरभावित्वादुत्पत्तेरिति चेद् मैवम् । उत्पत्त्यनन्तरं ह्यात्मलाभः न त्वात्मलाभ एवोत्पत्तिरिति युक्तमुक्तं यौगपद्यमुत्पत्तिरिति ॥

यौगपद्यं लक्षयति अनेकेषामिति । प्रसङ्गागतं क्षणं लक्षयति विभागेति । विभागेनानुत्पाद्यो यो विभागः कर्मजः तस्य यः प्रागभावः तेन सम्बद्धं यत् कर्म तेनावच्छिन्नो यः कालः स क्षण इत्यर्थः । कालः क्षण इत्युक्ते सकलकालस्य क्षणत्वापत्तिः । ततो ऽवच्छिन्नेति । एवं च पक्षाहोरात्रादौ अतः कर्मेति । एवमपि द्वित्रेषु क्षणेषु कर्मयुक्तेषु अतिव्याप्तिरतः सम्बद्धेति । तथापि घटपटसम्बद्धकर्मावच्छिन्नद्वित्रिक्षणेष्वतिव्याप्तिरतः प्रागभावेति । एवमपि घटप्रागभावसम्बद्धकर्मावच्छिन्ने ऽतिव्याप्तिरतो विभागेति । ( तथापि प्रागभावसम्बन्धः क्षण इत्युक्ते प्रागभावस्य बहुकालव्यापित्वात्तत्रातिव्याप्तिरतो विभागानुत्पाद्येति ) * । विभागाऽनुत्पाद्यविभागप्रागभावसम्बन्धः क्षण इत्युक्ते प्रागभावस्य बहुकालव्यापित्वात्तत्रातिव्याप्तिरतः कर्मेति । एतदुक्तं भवति । विभागप्रागभावः कर्मणः पूर्वमपि विद्यते कर्म तु विभागोत्पत्त्यनन्तरमपि । ततः क्रियोत्पत्तिसमये विभागप्रागभावकर्मणोर्यः सम्बन्धस्तदाधारः कालः क्षण इत्यर्थः । अथ वा कालोपाध्यव्यापकः कालोपाधिः† क्षण इति । क्षणमात्रावस्थायि क्षणिकमित्यपि प्रसङ्गादुक्तम् ॥

**स्थितिर्वर्तमानत्वम् । तच्च प्राक्सम्बद्धस्वाऽभावरहितस्वरूपवत्त्वम् । स्वकार्यप्रागभावसम्बन्धित्वं वा ॥**

---

* ( ) एतदन्तर्गतो ग्रन्थो नास्ति २ पु० ।

† कालोपाधिरिति नास्ति २ पु० ।

**विनाशः प्रध्वंसः ॥**

स्थितिं लक्षयति स्थितिरिति । किं तद्वर्तमानत्वमत आह तच्चेति । प्राक्सम्बद्धो* यो ऽयं स्वस्य घटादिकार्यस्याभावः तेन रहितं यत्स्वरूपं तद्वत्त्वं वर्तमानत्वमित्यर्थः । स्वरूपवत्त्वं वर्तमानत्वमित्युक्ते विनाशे ऽतिव्याप्तिरतो ऽभावरहितेति । यस्य कस्याप्यभावरहितस्वरूपवत्त्वं † विनाशे ऽप्यस्तीति वक्ति स्वेति । विनाशस्याभावान्तराभावान्न दोषः । एवं चोत्पत्तावतिव्याप्तिरतः प्राक्संबद्धेति । उत्पत्तिस्तु सकलकारणयौगपद्यस्वरूपा सा ऽवर्तमानघटादेः प्रागभावसहितैवेति न प्राक्संबद्धस्वाभावरहितेति न दोषः । वर्तमानत्वस्य वा स्थितेर्वा लक्षणान्तरमाह स्वकार्येति । प्रागभावसंबद्धत्वं विनाशे ऽप्यस्तीति कार्यपदम् । एवमपि विनाशे उत्पत्तौ चातिव्याप्तिवारणाय स्वकार्येति । स्वस्य घटादेः कार्यं रूपादि तत्प्रागभावत्व‡मित्यर्थः । उत्पत्तिविनाशयोस्तु स्वनिष्ठकार्याभावाद् न तत्प्रागभावत्व§मिति भावः । विनाशलक्षणं स्पष्टम् ॥

**शरीरसम्बन्धेन ज्ञानवत्त्वं क्षेत्रज्ञत्वम् ॥**

**प्रत्यात्मसमवेतधर्माधर्मोपगृहीतत्वं‖ प्रत्यात्मनिष्ठत्वम् ॥**

नित्यज्ञानादिमत्त्वात्परमात्मनो लक्षणं स्पष्टमिति मत्वा जीवस्य लक्षणमाह शरीरेति । ईश्वरे ऽतिव्याप्तिवारणाय शरीरसम्बन्धेनेति । शरीरसम्बन्ध इत्युक्ते गगनादौ ततो ज्ञानवत्त्वमिति । प्रत्यात्मेति । प्रत्येकमात्मनि समवेतौ यौ धर्माधर्मौ ताभ्यामुपगृहीतत्वं स्वीकृतत्वं प्रत्यात्मनिष्ठत्वमित्यर्थः । उपगृहीतत्वं प्रत्यात्मनिष्ठत्वमित्युक्ते यदृच्छयोपगृहीतवस्त्रादा¶वतिव्याप्तिरतो ऽधर्मेति । एवं च नारकशरीरे ततो धर्मेति । धर्मोपगृहीतत्वमित्युक्ते देवादिशरीरे तस्य केवलं धर्मेणैवोत्पन्नत्वाद् अतो धर्माधर्मेति । धर्माधर्मयोरभावाद् धर्माधर्मोपगृहीतत्वं न सम्भवतीत्यत आह प्रत्यात्म-

---

* प्रागभावसंबद्ध इति ३ पु· ।

† स्वरूपत्वमिति ३ पु· पा· । अभावरहितस्वरूपवर्तमानत्वमिति १ पु· पा· ।

‡ प्रागभावव्रत्वमिति ३ पु· पा· ।

§ प्रागभाववत्त्वमिति ३ पु· पा· ।

‖ धर्माधर्मोपसंगृहीतत्वमिति २ पु· पा· ।

¶ यदृच्छयोपगृहीतत्वादाविति २ पु· पा· । घटपटयोर्गृहीतत्वादाविति ३ पु· पा· ।

समवेतेति । एकः सुखी अपरो दुःखीति सुखदुःखयोः प्रत्यात्मनियतत्वात् तत्कारणत्वेन धर्माधर्मावप्यात्मन्युपगन्तव्यावित्यर्थः ॥

**सितादीनां सप्तानां सितत्वादिकं लक्षणम् । मधुरादीनां मधुरत्वादिकम् । गन्धयोः सुरभित्वासुरभित्वे । शीतादीनां शीतत्वादिकम् । एकत्वादीनामेकत्वत्वादिकम् । अणुत्वादीनामणुत्वत्वादिकम् ॥**

**कर्मासमवायिकारणकः संयोगः कर्मजः । संयोगासमवायिकारणकः संयोगः संयोगजः । कर्मासमवायिकारणको विभागः कर्मजः । विभागासमवायिकारणको विभागो विभागजः ॥**

सिताद्यणुत्वादिपर्यन्तानां तज्जातियोगित्वमेव लक्षणम् । जातिश्च कपिलावृत्तिसकलसितवृत्तिरूपत्वावान्तरजातिः सितत्वमित्यादि बोध्यम् ॥

संयोगभेदं लक्षयति कर्मासमवायीति । संयोगजसंयोगे अतिव्याप्तिवारणाय कर्मेति । कर्मासमवायीत्युक्ते विभागे अतिव्याप्तिरतो वक्ति संयोगेति । संयोगासमवायिकारणः संयोगज इत्युक्ते पटादावतिव्याप्तिस्तस्यापि तन्तुसंयोगासमवायिजन्यत्वादतः संयोग इति । संयोगज इत्युक्ते कर्मणि अतिव्याप्तिस्ततः संयोगाऽसमवायीति* । एवं विभागलक्षणे ऽपि व्यावर्त्यं द्रष्टव्यम् । तच्च फलपतनादावतिव्याप्तिस्ततो विभाग इति ॥

**आदित्यसंयोगोत्पाद्ये परत्वापरत्वे कालकृते ॥**
**आदित्यसंयोगानुत्पाद्ये परत्वापरत्वे दिक्कृते ॥**

आदित्यपरिवर्तनं तपनपरिस्पन्दः तेनोत्पाद्ये इति विग्रहः । दिक्कृते ऽतिव्याप्तिवारणाय आदित्येति । आदित्यस्य परिवर्तनोत्पाद्ये देशादिसंयोगे अतिव्याप्तिरतः परत्वापरत्वे इति । आदित्यसंयोगानुत्पाद्यं रूपाद्यपि भवति अतः परत्वापरत्वे इति । कालकृते ऽतिव्याप्तिरत आदित्येति ॥

---

* संयोगमात्रं कर्मजो ऽपि भवति तद्वारणाय संयोगाऽसमवायीति ३ पु॰ पा॰ ।

**भावनाऽसाधारणकारणं ज्ञानं स्मृतिः ॥**

बुद्ध्यवान्तरभेदान् लक्षयति भावनेत्यादिना । (वक्ष्यमाणेषु सर्वत्र धर्मपरं लक्षणं द्रष्टव्यं लक्ष्यनिष्ठत्वार्थम्) * । भावना संस्कारः सोऽसाधारणं कारणं यस्य तच्च तद् ज्ञानं चेति विग्रहः । ज्ञानं स्मृतिरित्युक्ते ऽनुभवे ऽतिव्याप्तिरतो ऽसाधारणकारणेति । एवमप्यनुपपत्तिः । अनुभवस्यापि प्रमाऽप्रमारूपस्य गुणदोषाऽसाधारणकारणजन्यत्वाद् अतो भावनेति । भावना-व्यवहारे ऽतिव्याप्तिवारणाय ज्ञानेति । भावनाकारणं ज्ञानं स्मृतिरित्युक्ते प्रत्यभिज्ञायां † ततो ऽसाधारणेति । प्रत्यभिज्ञा इन्द्रियसंनिकर्षासाधारण-कारणिकेति न दोषः ॥

**अस्मृतिरूपं ‡ ज्ञानमनुभवः ॥**

**तत्त्वानुभवः प्रमा ॥**

**अतत्त्वज्ञानमप्रमा ॥**

**अनवधारणं ज्ञानं संशयः ॥**

**अवधारणरूपाऽतत्त्वज्ञानं विपर्ययः ॥**

**अज्ञायमानकरणजन्यस्तत्त्वानुभवः प्रत्यक्ष-प्रमा ॥**

**ज्ञायमानकरणजन्यस्तत्त्वानुभवो ऽनुमिति-प्रमा ॥**

स्मृतिरूपादन्यद् अस्मृतिरूपम् । घटादौ स्मृतौ चातिव्याप्तिवारणाय ज्ञानाऽस्मृतिरूपपदे । प्रमाणलक्षणे ऽपि घटादौ संशयादौ चातिव्याप्तिरतो ऽनुभवतत्त्वपदे । एवमप्रमालक्षणमपि । अवधारणं निश्चयज्ञानं तदन्यदनव-धारणं तच्च तद् ज्ञानमिति विग्रहः । प्रमायामतिव्याप्तिवारणायानवधारणेति । घटादौ अतिव्याप्तिवारणाय ज्ञानेति । ज्ञानं विपर्यय इत्युक्ते प्रमायामति-व्याप्तिरतो ऽतत्त्वेति । एवं संशये अतिव्याप्तिस्ततो ऽवधारणेति । अवधारण-रूपमित्युक्ते प्रमायामतिव्याप्तिरतो ऽतत्त्वेति । अतत्त्वावधारणमित्येव लक्षणम् ।

---

* ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु॰ ।

† प्रत्यभिज्ञाप्रत्यक्षे इति २ पु॰ पा॰ । प्रत्यभिज्ञाने इति ३ पु॰ पा॰ ।

‡ स्मृतिव्यतिरिक्तमिति १ पु॰ पा॰ ।

ज्ञानपदं स्पष्टार्थम् । अज्ञायमानं कारणमिन्द्रियं तज्जन्यस्तत्त्वानुभवश्चेति विग्रहः । तत्रानुभवः प्रत्यक्षप्रमेत्युक्ते अनुमितावतिव्याप्तिरतो ऽज्ञायमानेत्यादि । अज्ञायमानेत्युक्ते इन्द्रियसंयोगादौ अतिव्याप्तिस्ततः तत्त्वानुभवेति । शेषं गतार्थम् * । प्रत्यक्षप्रमायामतिव्याप्तिवारणाय ज्ञायमानेति । ज्ञायमानकारणं शब्दलिङ्गादि तज्जन्य इत्यर्थः । ज्ञायमानकरणधूमादिजन्यमशक्तनिवृत्तौ प्रसङ्गवारणाय तत्त्वानुभव इति । शेषं सुगमम् ॥

**प्रमायोगव्यवच्छिन्नं प्रमाणम् ॥**

**प्रत्यक्षप्रमायोगव्यवच्छिन्नं प्रत्यक्षप्रमाणम् ॥**

**तच्चेश्वरघ्राणरसनचक्षुःस्पर्शनश्रोत्रमनोलक्षणम् ।**

प्रमाणं लक्षयति प्रमेति । प्रमाया अयोगो ऽसंबन्धस्तेन व्यवच्छिन्नं रहितं यत्तत् प्रमाणमित्यर्थः । एवं चेश्वरे नित्या प्रमा सदा वर्त्तते इति प्रमायोगव्यवच्छिन्न ईश्वरोऽपि प्रमाणम् । इन्द्रियलिङ्गे अपि प्रमाणे । तयोर्व्यापारवतोः सद्भावे प्रमोत्पद्यतएवेति प्रमायोगव्यवच्छिन्नत्वात् । प्रमाया अव्यभिचारि प्रमाणमित्यर्थः । यद्यपि प्रमायोगव्यवच्छिन्नत्वं सुखादावप्यस्ति तथापि तदन्यत्वसाधनाश्रययोरन्यतरत्त्वे सतीति विवक्षितम् इत्यदोषः । तत्रायोगव्यवच्छिन्नत्वं छिदायोगव्यवच्छिन्नपरशौ वर्त्तते तद्वारणाय प्रमेति । प्रमा प्रमाणमित्युक्ते फले ऽतिव्याप्तिस्ततो ऽयोगव्यवच्छिन्नमिति । प्रत्यक्षलक्षणं सुगमम् । तद्भेदमाह तच्चेति ॥

**अनुमितिप्रमाऽयोगव्यवच्छिन्नमनुमानम् । तच्च व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानम् ॥**

अनुमानं लक्षयति अनुमितीति । प्रत्यक्षे अतिव्याप्तिवारणाय अनुमितीति । अनुमानस्वरूपमाह तच्चेति । व्याप्तिपक्षधर्मताभ्यां विशिष्टं यल्लिङ्गं तस्य ज्ञानमित्यर्थः । अनित्यः शब्दः चाक्षुषत्वादिति स्वरूपासिद्धावतिव्याप्तिवारणाय विशिष्टेति । अनित्यः शब्दः प्रमेयत्वादित्यनैकान्तिके अतिव्याप्तिवारणाय व्याप्तीति । व्याप्तिविशिष्टलिङ्गज्ञानमित्युक्ते अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वादिति विशेष्यासिद्धौ प्रसङ्गस्ततः पक्षधर्मतेति ॥

---

* शेषं सुगममिति ३ पु॰ पा॰ ।

**व्याप्तिश्च व्यापकस्य व्याप्याधिकरण उपाध्यभावविशिष्टः संबन्धः ॥**

व्याप्तिं लक्षयति व्याप्तिश्चेति । यस्मिन् कस्मिंश्चित्सम्बन्धेऽतिव्याप्तिरत उक्तं * व्यापकस्य व्याप्याधिकरण इति । व्याप्यमधिकरणं यस्य स तथा । साध्यस्य साधननिष्ठः सम्बन्ध इत्यर्थः । एवं च सोपाधिके मैत्रीतनयत्वादिसम्बन्धेऽतिव्याप्तिरत उक्तम् उपाध्यभावविशिष्ट इति । व्याप्यव्यापकाभ्यां साधनत्वसाध्यत्वाभिमतधर्मौ विवक्षितौ ॥

**पक्षधर्मता तु व्याप्यस्य पक्षसंबन्धः ॥**

**व्यापकं साध्यम् ॥**

**व्याप्यं लिङ्गम् ॥**

पक्षधर्मतामाह पक्षधर्मत्वमिति । पक्षसम्बन्धः पक्षधर्मत्वमित्युक्ते पर्वतादावतिव्याप्तिरतो व्याप्यस्येति । व्याप्यव्यापकयोर्लक्षणमाह व्यापकमिति । सुगमम् ॥

**उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः ॥**

उपाधिं लक्षयति उपाधिश्चेति । अस्योदाहरणं मैत्र्याः सप्तमः पुत्रः श्यामो भवितुमर्हति मैत्रीतनयत्वात् परिदृश्यमानषट्पुत्रवदिति अनुमाने शाकाद्यन्नपरिणामभेद उपाधिः । उप समीपस्थे साधने स्वधर्मं व्याप्तमादधातीत्युपाधिरित्युच्यते । यथा जपाकुसुमं स्वसंनिहिते स्फटिके लौहित्यमादधदुपाधिः । अत्रोपाधेर्लक्षणं योज्यते । साधनस्य मैत्रीपुत्रत्वस्याव्यापकत्वे सति साध्येन नरश्यामत्वेन समा व्याप्तिर्यस्य स तथा । तथा च यत्र नरश्यामत्वं तत्र तत्र शाकाद्यन्नपरिणामः यथा मैत्रीतनये श्यामत्वे । तथा च यत्र यत्र शाकाद्यन्नपरिणामः तत्र तत्र नरश्यामत्वं यथा तत्रैव मैत्रीपुत्रे इति साध्यसमा व्याप्तिः । तथा यत्र यत्र मैत्रीपुत्रत्वं तत्र तत्र शाकाद्यन्नपरिणाम इति व्याप्तिः । पक्षीकृते मैत्रीपुत्रे शाकाद्यन्नपरिणतेरनिश्चयात्ततोऽयमुपाधिः । व्यावृत्तिस्तु साधनाऽव्यापक उपाधिरित्युक्ते अनित्यः

---

* यः कश्चित् संबन्धो व्याप्तिर्भविष्यतीत्यत उक्तमिति ३ पु॰ पा॰ ।

शब्दः कार्यत्वाद् घटवदित्यत्र सदनुमाने सावयवत्वमुपाधिः स्यात् । भवति चायं साधनाव्यापकः । यद् यत्कार्यं तत्सावयवमिति व्याप्तेः कर्मादौ व्यभिचारात् । अत उक्तं साध्यव्यापक इति । एवं च तत्र नातिव्याप्तिः । सावयवत्वस्य साधनाव्यापकत्वे ऽपि साध्यव्यापकत्वाभावात् । यद्यदनित्यं तत्तत्सावयवमिति साध्यव्याप्तेर्गन्धादावतिव्याप्तिरतः सावयवत्वं कार्यत्वे नोपाधिः । साध्यव्यापक उपाधिरित्युक्ते पूर्वानुमानएव शब्देतरत्वमुपाधिः स्यात् । तस्य यत्कार्यं तच्छब्देतरदिति व्याप्तेः शब्दे पक्षे एव व्यभिचारेण साधनाव्यापकत्वात् । यदनित्यं तच्छब्देतरदिति साध्यव्यापकत्वाद् अत उक्तं समेति । साध्यपुरःसरा उपाधिपुरःसरा व्याप्तिर्यस्येति च समव्याप्तिः । यथा शाकाद्यन्नपरिणतिः । शब्देतरत्वे तु यद्यपि साध्यपुरःसरा व्याप्तिरस्ति तथापि यच्छब्देतरत् तदनित्यमिति उपाधिपुरःसरा व्याप्तिर्नास्ति आकाशे व्यभिचारात् । अतः समव्याप्तेरभावान्नायमुपाधिः । साध्यसमव्याप्तिरित्युक्ते अनित्या पृथिवी सावयवत्वाद् इत्यत्र कृतकत्वमुपाधिः स्यात् साध्यसमव्याप्तित्वाद् अत उक्तं साधनाव्यापकत्वे सतीति । कृतकत्वं च सावयवत्वस्याव्यापकमतो नोपाधिः ॥

ननु उपाधिः कथं हेत्वाभासः । व्याप्तिपक्षधर्मतयोरन्यतरस्याविघट्टनात् । यथा विरुद्धानैकान्तिकाभ्यां व्याप्तिर्विघट्ट्यते तथा न शाकाद्यन्नपरिणामसद्भावमात्रेण मैत्रीपुत्रत्वश्यामत्वयोर्व्याप्तिर्विघटिता भवति । न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वे अन्यस्य साध्यव्याप्यत्वविघटके अतिप्रसङ्गात् । नाप्यसिद्धकालात्ययापदिष्टवत्पक्षधर्मता विघट्ट्यते । उपाधिसत्त्वे ऽपि मैत्रीपुत्रत्वस्य हेतोः पक्षनिष्ठत्वादतो हेतोर्न दोष इति चेद् मैवम् । व्यभिचारोन्नायकत्वेनोपाधेर्दोषत्वात् । तथा हि । साध्यव्यापक उपाधिः पक्षाद्व्यावर्तमानः सन् स्वव्याप्यं साध्यमादाय व्यावर्तते । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात् । तथा ऽत्र सा ध्याभाववति पक्षे विपक्षरूपे वर्तमानो हेतुर्व्यभिचारी भवति । तदुक्तम् ।

व्यभिचारोन्नयं कुर्वन्नुपाधिर्याति दोषताम् ।
एतदेव हि सर्वेषामुपाधीनां परायणम् * ॥ इति ॥

* उत्तरार्द्धः १-३ पु॰ नास्ति ।

व्यभिचारोन्नयस्त्वेवम् । अयं हेतुः साध्यव्यभिचारी साध्यव्यापकोपाधिव्यभिचारित्वाद् यो यद्व्यापकव्यभिचारी स तद्व्याप्यव्यभिचारी यथा पृथ्वीत्वव्यापकद्रव्यत्वव्यभिचारी गुणत्वादिः पृथ्वीत्वव्यभिचारीति सामान्यतः । विशेषतस्तु मित्रापुत्रत्वं श्यामत्वव्यभिचारि शाकाद्यन्नपरिणामत्वेन व्यभिचारित्वात् प्रमेयत्ववदिति । विपक्षे बाधकस्तर्कः । शाकाद्यन्नपरिणामनरश्यामत्वयोर्वैद्यकशास्त्रादेव कार्यकारणभावावगमात् । कारणाभावे कार्यश्यामत्वाऽसम्भवः । पक्षीकृतमित्रापुत्रे शाकाद्यन्नपरिणतेरनिश्चये ऽपि साधनाव्यापकत्वसन्देहाद्भवत्येव संदिग्धोपाधिः । एवं निषिद्धत्वेन्धनत्वादयो * ज्ञेया इत्यलमतिविस्तरेण ॥

## पक्षव्यापकः सपक्षस्पर्शी विपक्षशून्यो ऽबाधितविषयो ऽसत्प्रतिपक्षः केवलान्वयी ॥

केवलान्वयिहेतुं लक्षयति पक्षव्यापक इति । पक्षव्यापकः केवलान्वयीत्युक्ते केवलव्यतिरेकिण्यतिव्याप्तिः तदर्थं सपक्षस्पर्शीति । एवमुक्ते धूमानुमाने अन्वयव्यतिरेकिणि । अतः विपक्षशून्य इति । विपक्षशून्य इत्युक्ते सर्वं क्षणिकं सत्त्वादिति अनध्यवसिते ऽतिव्याप्तिरतः सपक्षस्पर्शीति । विपक्षशून्यः सपक्षस्पर्शीत्युक्ते शब्दो ऽभिधेयश्चाक्षुषत्वाद् घटवद् इत्यत्र । अतो वक्ति पक्षव्यापक इति । चाक्षुषत्वस्य पक्षनिष्ठत्वाभावाद् न दोषः । व्यापकपदेनैवाभिधेयः शब्दो वर्णात्मकत्वादिति भागासिद्धोपि व्युदासित एव । एतत्त्रितयोक्तौ वह्निरनुष्णः पदार्थत्वादिति † बाधिते ऽतिव्याप्तिवारणाय अबाधितेति । एवमभिधेयः शब्दः प्रमेयत्वादनभिधेयः शब्दः श्रावणत्वाद् व्यतिरेके घटवदिति सत्प्रतिपक्षे ऽतिव्याप्तिरतो ऽसत्प्रतिपक्ष इति ॥

## पक्षव्यापकः सपक्षशून्यो विपक्षाद्व्यावृत्तो ऽबाधितविषयो ऽसत्प्रतिपक्षः केवलव्यतिरेकी ॥

केवलव्यतिरेकिणं लक्षयति पक्षव्यापकः सपक्षशून्य इति । विपक्षाद् व्यावृत्तः केवलव्यतिरेकीत्युक्ते ऽन्वयव्यतिरेकिण्यतिव्याप्तिरतः सपक्षशून्य

* एवं निषिद्धत्वभावत्वार्द्रेन्धनत्वादय इति २ पु॰ पा॰ ।
† पदार्थत्वाज्जलवदितीति २ पु॰ पा॰ ।

इति । एतद्द्वयोक्तौ वेदः सर्वज्ञकर्तृकः चाक्षुषत्वाद् यः सर्वज्ञकर्तृको न भवति स चाक्षुषो न भवति यथाऽऽत्मा इत्यसिद्धे प्रसङ्गः । अतः पक्षव्यापक इति । पक्षव्यापक इत्युक्ते केवलान्वयिनि प्रसङ्गः अतः सपक्षशून्य इति । एतद्द्वयोक्तौ सर्वमनित्यं सत्त्वादित्यत्र प्रसङ्गो ऽतो विपक्षाद्व्यावृत्त इति । अयं विपक्षाभावान्न विपक्षाद्व्यावृत्तः । विपक्षाभावस्तु सर्वस्य पक्षीकृतत्वात् । एतत्त्रयोक्तौ सर्वं कार्यं प्रधानजन्यं कार्यत्वादिति प्रत्यक्षबाधिते ऽनुमाने प्रसङ्गस्ततो ऽबाधितविषय इति । एवमपि कार्यं सर्वज्ञजन्यं कादाचित्कत्वाद् व्यतिरेके गगनवत् सर्वं कार्यं सर्वज्ञजन्यं न भवति प्रमेयत्वादाकाशवदिति सत्प्रतिपक्षे अतिप्रसङ्गो ऽतो ऽसत्प्रतिपक्ष इति ॥

**पक्षव्यापकः सपक्षस्पर्शी विपक्षाद्व्यावृत्तो ऽबाधितविषयो ऽसत्प्रतिपक्षो ऽन्वयव्यतिरेकी ॥**

अन्वयव्यतिरेकिणं लक्षयति पक्षेति । पक्षव्यापक इत्युक्ते केवलव्यतिरेकिणि प्रसङ्गः । अतः सपक्षस्पर्शीति । एतद्द्वयोक्तौ केवलान्वयिनि । अतो विपक्षाद्व्यावृत्त इति । केवलान्वयिनि विपक्षाभावान्न तद्व्यावृत्तिः । विपक्षाद्व्यावृत्त इत्युक्ते पुनरेव केवलव्यतिरेकिणि । अतः सपक्षस्पर्शीति । एतद्द्वयोक्तौ अनित्यः शब्दः चाक्षुषत्वे सति सामान्यवत्त्वादित्यत्रासिद्धभेदे अतो वक्ति पक्षव्यापक इति । एतद्द्वयोक्तौ परमाणवो ऽनित्याः मूर्तत्वाद् घटवदिति अन्वयव्यतिरेकिणि धर्मिग्राहकमानबाधिते ऽतिव्याप्तिरतो ऽबाधितेति । एवमपि शब्दो ऽनित्यः कार्यत्वाद् नित्यः शब्दः श्रावणत्वादिति सत्प्रतिपक्षे ऽतिव्याप्तिरतो ऽसत्प्रतिपक्ष इति ॥

**संदिग्धसाध्यधर्मवत्त्वेनोपात्तत्वं पक्षत्वम् ॥**

**निश्चितसाध्याधिकरणत्वं सपक्षत्वम् ॥**

**निश्चितसाध्याभावाधिकरणत्वं विपक्षत्वम् ॥**

पक्षव्यापकत्वादिज्ञानाय पक्षादिलक्षणमाह संदिग्धेति । संदिग्धं साध्यं यस्य तस्य भावस्तत्त्वं तेनेत्थंभावे * तृतीया । संदिग्धसाध्यवान् पक्ष इत्यर्थः । उपात्तत्वं घटादावतिव्याप्तमतो विशिनष्टि साध्यवत्त्वेनेति । एवं सपक्षे अतिव्याप्तिस्तस्यापि साध्यवत्त्वेनोपात्तत्वात् । इत्थंभावे तृतीयया

* इत्थंभूतलक्षणे इति २ पु॰ पा॰ ।

मतुबर्थस्योक्तत्वात् । अतः संदिग्धेति । संदिग्धत्वेनोपात्तत्वं स्थाणवादावतिव्याप्त*मतो वह्नि साध्यत्वेनेति । अधिकरणत्वं सपक्षत्वम् इत्युक्ते विपक्षे यस्य कस्याप्यधिकरणे ऽतिव्याप्तिरतः साध्येति । एवं च पक्षे अतो निश्चितेति । निश्चितं यत्साध्यं वह्निमत्त्वादि तस्याधिकरणमाधारः स सपक्ष इत्यर्थः । निश्चितं च तत्साध्याऽनधिकरणं चेति विग्रहः । अनधिकरणमित्युक्ते असम्भवः । विपक्षस्यापि यत्किंचिदधिकरणत्वात् । अतः साध्येति । एवमुक्ते वह्निमानयं पर्वतो† धूमवत्त्वादिति प्रयोगे महाह्रदे ऽपि यदा कदा चिद् वह्निमत्त्वं नास्ति अस्ति वेति सन्देहः तदा तस्य विपक्षत्वं नास्तीति तत्रातिव्याप्तिस्तदर्थं निश्चितेति । पक्षादीनां त्रयाणां यथोक्तस्वरूपत्वेन निश्चितानां‡मेवानुमितिजनकत्वात् साध्याभाववत्त्वेन निश्चित एव विपक्ष इत्यर्थः ॥

**स्वार्थत्वमर्थरूपत्वम् । परार्थत्वं शब्दरूपत्वम् ॥ शब्दस्याप्यनुमानविषयत्वेनाविनाभावोपजीवकत्वेन वा ऽनुमानत्वम् ॥**

अर्थरूपमनुमानं स्वार्थं शब्दरूपमनुमानं परार्थमित्यर्थः । पञ्चावयवोपेतत्वं च शब्दरूपत्वम् ॥

ननु शब्दो नानुमानं लिङ्गानुसंधानमन्तरेण प्रमाजनकत्वात् प्रत्यक्षवद् इत्याशङ्क्याह शब्दस्यापीति । शब्दस्याप्यनुमानरूपत्वं§ कुतः । अनुमानविषयत्वेनाविनाभावोपजीवकत्वेन वेत्यन्वयः । अनुमानस्य विषयः परोक्षः स एव विषयो यस्य शब्दस्य|| तस्य भावस्तत्त्वं तेनेत्यर्थः । हेतौ तृतीया । तथा च शब्दो ऽनुमानम् (प्रमाणत्वे सति परोक्षविषयत्वादनुमानवत् । तथा शब्दो ऽनुमानम्)¶ । अविनाभावोपजीवकत्वाद् अनुमानवदिति । अविनाभावमुपजीवतीत्यविनाभावोपजीवकः । कथमिति चेद् इत्थम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्र एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्व-

---

* अतिव्यापकमिति १ पु॰ पा॰ ।      † प्रदेश इति १ पु॰ पा॰ ।

‡ त्रयाणामपि तत्त्वेन निश्चितानामिति २-३-पु॰ पा॰ ।

§ अनुमानविषयत्वमिति २ पु॰ पा॰ । || शब्दस्येति नास्ति । २ पु॰ ।

¶ ( ) एतन्मध्यगो ग्रन्थो नास्ति १ पु॰ ।

काणि आकाङ्क्षायोग्यतासंनिधिमत्त्वाद् *गामानयेति पदवत्† । पदार्थसंसर्गो वाक्यार्थः‡ । स चाविनाभावबलेनैव लिङ्गरूपेण शब्देनावगतः । अतः शब्दो ऽनुमानमेवेत्यर्थः । तथा च लिङ्गरूपेणैव शब्दस्यार्थगमकत्वात् पूर्वपक्षे हेतुरसिद्ध इति द्रष्टव्यम् ॥

**तत्र पक्षवचनं प्रतिज्ञा । लिङ्गस्य पक्षधर्मत्ववचनं हेतुः । दृष्टान्तवचनमुदाहरणम् । परामर्शत्ववचनमुपनयः । लिङ्गसम्बन्धप्रयुक्तनिश्चितसाध्यवत्त्ववचनं निगमनम् ॥**

प्रतिज्ञादीनां लक्षणमाह तत्रेति । वचनं प्रतिज्ञेत्युक्ते घट इति वचने अतिव्याप्तिरतः पक्षेति । पक्षधर्मत्ववचनं हेतुरित्युक्ते पर्वतो वह्निमान् इति साध्यस्य पक्षधर्मतावचने ऽतो लिङ्गस्येति । शेषं पूर्ववत् । प्रतिज्ञादावतिव्याप्तिवारणाय दृष्टान्तेति । एवं च यथा गौस्तथा गवय इत्यादौ प्रसङ्गस्ततो ऽनुमानावयवत्वे सतीति प्रकरणाद् ज्ञातव्यम् । लिङ्गस्येति वा ऽनुषञ्जनीयम् । परामर्शस्तु तृतीयलिङ्गज्ञानम्§ । वह्निव्याप्यधूमवानयमित्यादि । व्यावृत्तिः स्पष्टा । लिङ्गसम्बन्धेन तस्मादित्येवंरूपेण प्रयुक्तं निश्चितसाध्यवचनं निगमनमित्यर्थः । प्रतिज्ञायामतिव्याप्तिवारणाय निश्चितेति । दृष्टान्ते ऽतिव्याप्तिवारणाय लिङ्गसम्बन्धेति । उपनये ऽतिव्याप्तिवारणाय निश्चितेत्यादि । प्रयुक्तत्वं समभिव्याहृतत्वम्‖ ॥

**अङ्गवैकल्यमाभासत्वम् । पक्षधर्मत्वेनानिश्चितत्वमसिद्धत्वम् । पक्षविपक्षमात्रस्पर्शित्वं विरुद्धत्वम् । पक्षत्रयवृत्तित्वमनैकान्तिकत्वम् । साध्यतदभावसाध्यत्वं संदिग्धत्वम् ॥**

हेत्वाभासं लक्षयति अङ्गवैकल्यमिति । अङ्गानि पक्षधर्मत्वादीनि तैर्वैकल्यं तद्रहितत्वमित्यर्थः । अनिश्चितत्वं स्थाण्वादावप्यस्तीति तद्वार-

---

* संनिधिमत्पदकदम्बकत्वादिति २ पु॰ पा॰ । † पदकदम्बकवदित्यत्रापि पाठः २ पु॰ ।
‡ शक्यार्थ इति १ पु॰ पा॰ । § परामर्शस्तृतीयं लिङ्गस्य ज्ञानमिति २ पु॰ पा॰ ।
‖ समभिव्यवहृतत्वमिति २ पु पा॰ ।

णाय पक्षधर्मत्वेनेति । क्कचिल्लिङ्गत्वेनेति पाठः । तत्रापि पक्षधर्मतये- त्यर्थः । पक्षविपक्षस्पर्शित्व*मनैकान्तिके ऽप्यस्तीति तद्वारणाय मात्रेति । अनैकान्तिकानध्यवसितप्रकरणसमानां सन्देहकार्यकर्तृत्वेन सन्दिग्धव्यप- देशं विधाय त्रितयं युगपदेव लक्षयति साध्येति । साध्यं च साध्याभावश्च तौ साध्यौ यस्य स साध्यतदभावसाध्यः । तस्य भावस्तत्त्वम् । विरुद्धे सद- नुमाने चातिव्याप्तिवारणाय उभयसाध्यत्वमुक्तम् । तत्र प्रमेयत्वस्यानैका- न्तिकस्य साध्यतदभाववद्वृत्तित्वेनोभयसाधनसम्भवाद् (अनध्यवसितस्य पक्षमात्रवृत्तित्वेनोभयसम्भवात् प्रकरणसमस्य साध्यतदभावयोः समत्वेनो- भयसाधनसम्भवादिति त्रयाणामुभयसाध्यत्वम्)† अन्यतरनिर्णयाभावादेव च सन्दिग्धत्वम् । अपरं स्वयमूहनीयं विस्तरभयान्न नोच्यते । क्कचित्तु अनैकान्तिकानध्यवसितयोः पृथग् लक्षणं दृश्यते तदा सन्दिग्धत्वशब्देन सत्प्रतिपक्ष एव ग्राह्यः । पूर्वपाठ एव तु सार्वत्रिकष्टीकान्तरसंमतश्चेति ॥

## उपजीव्यप्रमाणनिश्चितसाध्यविपरीतत्वं कालात्ययापदिष्टत्वम् ॥

बाधं लक्षयति उपजीव्येति । उपजीव्येनाधिकबलेन प्रमाणेन निश्चितः साध्यविपरीतः साध्याभावो यस्य तस्य भावस्तत्त्वं तत्कालात्ययापदि- ष्टत्वमित्यर्थः । साध्यवैपरीत्यं सन्दिग्धे पर्वते ऽप्यस्तीति सदनुमाने ऽति- व्याप्तिवारणाय निश्चितेति । छलजात्यादिना निश्चितसाध्यविपर्यये सदनु- माने ऽतिव्याप्तिवारणाय प्रमाणेति । सत्प्रतिपक्षे ऽतिव्याप्तिवारणाय उपजी- व्येति ॥

## अनिष्टव्यापकप्रसञ्जनं तर्कः ॥

तर्कं लक्षयति अनिष्टेति । अनिष्टं यद्व्यापकं धूमाभावादिरूपं तस्य प्रसञ्जनं तर्क इत्यर्थः । त्वं चौरस्त्वमपि चौर इत्यादिमतानुज्ञायामति- व्याप्तिवारणाय व्यापकेति । महाह्रदे वह्निर्नास्ति धूमो ऽपि नास्तीत्यादिप्र- सञ्जने ऽतिव्याप्तिवारणायानिष्टेति ॥

---

* स्पर्शवत्त्वमिति १ पु॰ पा॰ । † ( ) एतन्मध्यगतो ग्रन्थो नास्ति २ पु॰ ।

**तुल्यत्वेनाभावयोः प्रत्यभाववचनं प्रसञ्जनम् ॥**

प्रसञ्जनं लक्षयति तुल्यत्वेनेति । तुल्यत्वं समानदेशकालावस्थायित्वम्* अभावयोर्व्याप्तिमत्त्वमिति यावत् । यत्र यदा वह्निर्नास्ति तत्र तदा धूमो ऽपि नास्तीति प्रतीतेः । एवं चाभावयोर्मध्ये तुल्यत्वेन हेतुना यत्प्रत्यभाववचनं प्रतिकूलाभाववचनं तत्प्रसञ्जनमित्यर्थः । प्रत्यभाववचनं प्रसञ्जनमित्युक्ते यदि सुखं तर्हि दुःखं नेति वचने ऽतिव्याप्तिवारणाय भावाभावयोरिति । एवमुक्ते यदि वह्निर्न स्यात्तर्हि जलं न स्यादिति वचने ऽतिप्रसङ्गः । ततः तुल्यत्वेनेति । व्याप्याभावारोपे व्यापकाभावारोपः प्रसञ्जनमिति रहस्यम् । अभावयोः प्रत्यभाववचनमित्येतद् बाहुल्याभिप्रायेण । वस्तुतस्तु यदि पीतं जलं परमन्तरधक्ष्यत् तर्हि तदवशिष्टं मामपि दहेदित्यादौ भावयोरपि प्रसञ्जनस्य दृष्टत्वादिति ॥

**निद्रादुष्टान्तःकरणजं ज्ञानं स्वप्नः ॥**

**योगजधर्माऽननुगृहीतस्य मनसो निरिन्द्रियप्रदेशावस्थानं निद्रा ॥**

स्वप्नं लक्षयति निद्रेति । निद्रादोषेण दुष्टं यदन्तःकरणं मनः तज्जन्यं ज्ञानं स्वप्न इत्यर्थः । जागरे घटादिज्ञानव्युदासायान्तःकरणेति । जागरे सुखादिज्ञानव्युदासाय दुष्टेति । जाग्रन्मानसभ्रम† व्युदासाय निद्रेति । केयं निद्रा नामेत्यत आह योगजेति । योगाभ्यासेन जनितो धर्मो योगजः तेनाऽननुगृहीतस्याऽसहकृतस्य मनसो निरिन्द्रियप्रदेशे बाह्येन्द्रियसम्बन्धरहिते स्थले वर्तनं निद्रेत्यर्थः । समाधावतिव्याप्तिवारणाय योगजधर्माऽननुगृहीतस्येति ॥

**वस्तुस्वरूपमात्रग्रहणं निर्विकल्पकम् । विशिष्टस्य ग्रहणं सविकल्पकम् । अतीतावच्छिन्नवस्तुग्रहणं प्रत्यभिज्ञानम् । दुःखसाधनज्ञानं हानम् । सुखसाधनज्ञानमुपादानम् । उभयासाधनत्वज्ञानमुपेक्षा ॥**

---

* देशकालावस्थत्वमिति २ पु॰ पा॰ ।

† मानसजन्यभ्रमेति २ पु॰ पा॰ ।

ग्रहणं निर्विकल्पकमित्युक्ते भ्रमे ऽतिव्याप्तिवारणाय वस्तुपदम् । एवं च सविकल्पके ऽतो मात्रेति । इन्द्रियादौ प्रसङ्गवारणाय ग्रहणमिति । निर्विकल्पके ऽतिव्याप्तिवारणाय विशिष्टपदम् । वस्तुग्रहणं प्रत्यभिज्ञेत्युक्ते अभिज्ञायामतिव्याप्तिरतो ऽतीतेत्यादि । उत्तरं लक्षणत्रयं सुगमम् ॥

**उत्कटैककोटिकः संशय ऊहः ॥**

**अनालिङ्गितोभयकोट्यनवधारणज्ञानमनध्यवसायः ॥**

ऊहनम् ऊह इति व्युत्पत्त्यैव तल्लक्षणं* स्पष्टमिति मत्वा ऽनध्यवसायं लक्षयति अनालिङ्गितेति । अनालिङ्गिते अस्पष्टे उभयकोटी यस्यानवधारणज्ञानस्य सो ऽनध्यवसाय इत्यर्थः । ( न तु कोटिद्वयसम्बन्ध एव नास्तीति । तथा सति संशयान्तर्भावानुपपत्तेः ) † । अनवधारणं ज्ञानं स्थाणुपुरुषसंदेहे अतिव्यापकमतो ऽनालिङ्गितेत्यादि ॥

**प्रयत्नोत्पाद्यसाधनाधीनं सुखं सांसारिकम् ॥**

**इच्छामात्राधीनसाधनसाध्यं सुखं स्वर्गः ॥**

सुखभेदौ लक्षयति प्रयत्नोत्पाद्येति । प्रयत्नोत्पाद्यं साधनं स्रक्चन्दनादि तदधीनं तज्जन्यमित्यर्थः । सुखं सांसारिकमित्युक्ते पराभिमते नित्यसुखे ऽतिव्याप्तिः । अतः साधनेति । एवं मुक्ते स्वर्गे ऽतः प्रयत्नेति । इच्छामात्राधीनं च तत्साधनं चेति विग्रहः । साधनसाध्यत्वम् इच्छाधीनसाधनसाध्यत्वं वा सांसारिके ऽप्यस्तीति तद्वारणाय मात्रेति ॥

**सांसिद्धिकत्वं तेजःसंयोगाऽनुत्पाद्यत्वम् । तेजःसंयोगोत्पाद्यत्वं नैमित्तिकत्वम् ॥**

द्रवत्वभेदं लक्षयति सांसिद्धिकत्वमिति । सुगमं लक्षणद्वयम् ।

द्रवत्वमित्युभयत्रापि सम्बन्धनीयम् । अतो गगनालोकयोर्न प्रसङ्गः ॥

**कर्मजः संस्कारो वेगः । ज्ञानजः संस्कारो भावना । स्थित्यापादको गुणः संस्कारः स्थितिस्थापकः ‡ ॥**

---

* व्युत्पत्तौ ऊहलक्षणमिति २ पु॰ पा॰ । † ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ ।

‡ पुस्तकचतुष्टये ऽपि–ऋजुत्वापादकः संस्कारः स्थितिस्थापक इत्येव दृश्यते तथापि टीकाकारेण तस्य क्वाचित्कत्वोक्तेः ३ पुस्तके उपरितनपाठस्य लाभाच्च तथा निर्वेशितः ।

वेगभावनालक्षणे सुगमे । स्थित्यापादको गुण इत्येकं स्थित्यापादकः संस्कार इत्यपरम् इति विभज्य स्थितिस्थापकस्य लक्षणद्वयं द्रष्टव्यम् । द्रव्येऽतिव्याप्तिवारणाय गुणपदम् । ऋजुत्वापादकः स्थितिस्थापकः इति क्वचित्पाठः । स तु वेष्टनजनके अव्यापक इत्युपेक्षणीयः । तस्मात् स्थित्यापादको गुणः संस्कारः स्थितिस्थापक इत्येव लक्षणं विभागेन द्रष्टव्यम् । इच्छाद्यवान्तरभेदानामनुक्तानि लक्षणानि स्वरूपनिरुक्त्यैव द्रष्टव्यानि ॥

**अव्यापकत्वं स्वाभावसादेश्यम् ॥**

**तदभावो व्यापकत्वम् ॥**

**विहितत्वं धर्मोत्पादकत्वम् । निषिद्धत्वमधर्मोत्पादकत्वम् । उभयविपरीतत्वमुदासीनत्वम् ॥**

गुणानामुक्तमव्यापकत्वादि लक्षयति अव्यापकत्वमित्यादिना । समानः देशो यस्य तस्य भावः सादेश्यम् । एकनिष्ठत्वमिति यावत् । सादेश्यं रूपरसादौ वर्तते इत्यभावेति । एवं पटत्वाभावसादेश्यं घटत्वस्य वर्तत एवेति अत उक्तं स्वेति । एकस्मिन्नेव तरौ * अङ्गुलीसंयोगतदभावौ वर्तेते इति संयोगोऽव्यापकः । एवं विभागसुखदुःखेच्छाशब्दादिषु द्रष्टव्यम् † । व्यापकलक्षणं सुगमम् । विहितादित्रयं सुगममेव ॥

**निर्बाधकं सामान्यं जातिः ॥**

**सबाधकं सामान्यमुपाधिः ॥**

जात्युपाध्योर्लक्षणमाह निर्बाधकमिति । बाधकं

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥

इति किरणावलीलीलावतीकारोक्तम् ‡ । व्यक्तेरभेद आकाशत्वादौ । तुल्यत्वं हस्तत्वकरत्वादौ § । सङ्करो भूतत्वमूर्तत्वादौ । तथा हि । भूतत्वं

* घटे इति ३ पु॰ पा॰ ।

† विभागसुखादिशब्देषु द्रष्टव्यमिति २ पु॰ पा॰ । एवमन्यत्रापीति ३ पु॰ ।

‡ किरणावलीत्यादि नास्ति ३ पु॰ ।

§ हस्तकरत्वादौ इति १ पु॰ पा॰ ।

मूर्तत्वं परिविहाय आकाशे वर्तते । मूर्तत्वं भूतत्वं परिहाय मनसि वर्तते । तदुभयं पृथिव्यादिचतुष्टये वर्तते इति परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोः सामानाधिकरण्यलक्षणं सांकर्यं भूतत्वमूर्तत्वयोः संभवति । तदुक्तम् ।

अन्योन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः ।
सामान्ययोः समावेशो जातिसंकर उच्यते ॥ इति ॥

अत एतदुभयमुपाधिरूपं सामान्यम् । अनवस्थितिर्जातौ जात्यङ्गीकारे। रूपहानिर्विशेषादौ । असंबन्धः समवायादौ । समवाये समवायाऽनङ्गीकारात् । एवंविधजातिबाधकाभावे यत्सामान्यं सा जातिः । बाधके तु औपाधिकं सामान्यमित्यर्थः ॥

**आरोपितनीलरूपो ऽभावो ऽन्धकारः ॥**
**ज्ञानसम्बन्धो ज्ञानविषयत्वम् ॥**
**तत्त्वज्ञानेन नियमेनावच्छेद्यत्वं प्रमेयत्वम् ॥**
**गुणादिषु च संख्याव्यवहारः संख्याप्रत्यासत्तिनिबन्धनः । अत एव संख्याप्रत्यासत्तिनिबन्धनत्वम् ॥**

अन्धकारं लक्षयति आरोपितेति । घटाभावे ऽतिव्याप्तिवारणाय नीलरूप इति । एवं सत्यसम्भवः । तत आरोपितेति । नीलरूपो ऽन्धकार इत्युक्ते आरोपितनीलरूपे स्फटिकादौ अतिव्याप्तिः । अतो ऽभाव इति ॥

ज्ञानसम्बन्धं लक्षयति ज्ञानेति । ज्ञाततालक्षणो ज्ञानसम्बन्धः । तस्य लक्षणं ज्ञानविषयत्वमित्यर्थः ॥

विषयत्वप्रसङ्गेन प्रमाविषयत्वं लक्षयति तत्त्वज्ञानेनेति । अवच्छेदकत्वं व्यावर्तकत्वं विशेषणत्वं विषयत्वमिति यावत् । शुक्तिरजतसंसर्गे भ्रमविषये अतिव्याप्तिवारणाय तत्त्वज्ञानेनेति । तथापि न व्यावृत्तिः * । तस्यापि धर्म्यंशे तत्त्वज्ञानेनावच्छेद्यत्वाद् अतो नियमेनेति । नियमेन साकल्येनेत्यर्थः । यदुक्तं यथा संख्याया इव गुणे इत्यनेन संख्याया गुणे ऽन्तर्भावे गुणादौ कथं तद्व्यवहार इति । अत आह गुणादिष्विति । संख्याया गुणादीनां † प्रत्यासत्तिरेकार्थ

* तथापि न निवृत्तिरिति २ पु॰ पा॰ । † संख्यया सह गुणादीनामिति २–३ पु॰ पा॰ ।

समवायलक्षणा। तन्निबन्धनस्तत्कारणक इत्यर्थः*। फलितमाह अत एवेति। व्यवहारस्येति शेषः। अत एव औपचारिकत्वादेवेत्यर्थः॥

**कार्योत्पादकत्वं कारणत्वम्। स्वसमवेतकार्योत्पादकत्वं समवायिकारणत्वम्। समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणत्वम्। उभयविपरीतत्वं निमित्तकारणत्वम्॥**

कारणं लक्षयति कार्येति। उत्पत्तेः सापेक्षत्वात् कार्यपदम्। कार्योत्पादकं समवायिकारणमित्युक्ते निमित्तादृष्टादावतः स्वसमवेतेति। अवधृतं निश्चितं सामर्थ्यं यस्य तत्तथा। एवंविधं च तत्समवायिकारणप्रत्यासन्नं चेति विग्रहः। अवधृतेत्युक्ते समवायिकारणे ऽतिप्रसङ्गः। अतः समवायिकारणप्रत्यासन्नमिति। एतावन्मात्रोक्ते पटं प्रति तन्तुरूपादेरपि असमवायिकारणत्वप्रसङ्गः। अतो ऽवधृतेति। समवायिकारणप्रत्यासन्नत्वं द्विधा सम्भवति। कार्यकारणैकार्थसमवायात्। तत्र कार्यैकार्थसमवायो यथा तन्तुसंयोगस्य पटेनैकार्थसमवायः। कारणैकार्थसमवायो यथा तन्तुरूपस्य पटरूपसमवायिकारणेन पटेन तन्तुसमवायः। निमित्तकारणलक्षणं स्पष्टम्॥

**इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्त्तत्वम्। तदभावो ऽमूर्त्तत्वम्॥**

मूर्त्तत्वं लक्षयति इयत्तेति। इयत्ता परिच्छेदः। अविभुत्वमिति यावत्। तेन अवच्छिन्नं परिमाणं तेन यद्योग इत्यर्थः। आकाशादावतिव्याप्तिवारणाय इयत्तावच्छिन्नेति। अमूर्त्तलक्षणं स्पष्टम्॥

**कार्यायोगव्यवच्छिन्ना सामग्री॥**

**संज्ञामात्रेण पदार्थानामभिधानमुद्देशः।**

कारणप्रसङ्गात्सामग्रीं लक्षयति। कार्येति। कार्यस्य अयोगो व्यभिचारः तेन व्यवच्छिन्ना सामग्रीत्यर्थः। सर्वलक्षणमूलभूतम् उद्देशं लक्षयति संज्ञेति। लक्षणे ऽतिव्याप्तिवारणाय सञ्ज्ञामात्रेणेति॥

---

* तत्कारणक इति २ पु॰ पा॰।

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराः पृथिवीसमवेताः । रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारा अप्सु समवेताः । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारास्तेजःसमवेताः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा वायुसमवेताः । संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दा आकाशसमवेताः । संख्यापरिमाणपृथक्त्वसंयोगविभागाः कालदिक्समवेताः । संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना आत्मसमवेताः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा मनःसमवेताः । कर्म मूर्त्तद्रव्यसमवेतमनित्यमेव । सामान्यं द्रव्यगुणकर्मसमवेतम् । विशेषास्तु नित्यद्रव्यसमवेताः । समवायाभावावसमवेतावेव । द्रव्यं तु कार्यरूपं स्वावयवसमवेतम् । अकार्यं द्रव्यमसमवेतमेव ॥**

एवमुद्देशलक्षणे अभिधाय पदार्थानां किं चित् साधर्म्यं वैधर्म्यं च दर्शयन् गुणादीनां द्रव्येषु संनिवेशमाह रूपेत्यादिना । पृथिव्युदकात्मनां चतुर्दश गुणाः । तेजस एकादश गुणाः । वायोर्नव गुणाः । ईश्वरमनसोरष्ट गुणाः । गगने षड् गुणाः । दिक्कालयोः पञ्च गुणा इति । इदमेव च तद्गतां साधर्म्यम् अन्यापेक्षया च वैधर्म्यम् । कर्माश्रयमाह कर्मेति । मूर्तद्रव्याणामेतत्साधर्म्यमितरापेक्षया च वैधर्म्यमित्यर्थः । इतरेषां च तदभाववत्त्वं निष्क्रियत्वं च साधम्य सूचितं भवति । द्रव्यादीनां त्रयाणां साधर्म्यमाह सामान्यमिति । इतरेषां निःसामान्यं साधर्म्यमुक्तं भवति । विशेषाणां सा-

धर्म्यं वैधर्म्यं चाह विशेषा इति । समवायाभावयोः साधर्म्यमाह समवायेति । कार्यद्रव्यसाधर्म्यमाह द्रव्यं त्विति । अकार्यद्रव्यसाधर्म्यमाह अकार्यमिति । ग्रन्थः स्पष्टः ॥

**विनाशस्तु द्रव्यस्य समवाय्यसमवायिकारणनाशाभ्याम्। गुणस्य तु समवाय्यसमवायिनिमित्तकारणनाशविरोधिगुणेभ्यो विनाशः। कर्मणः समवाय्यसमवायिनिमित्तकारणनाशोत्तरसंयोगाभ्यां विनाशः। प्रागभावस्य प्रतियोग्युत्पादनसामग्रीतः। अन्योन्याभावस्य प्रतियोगिनाशकारणात् ॥**

एवं किं चित्साधर्म्यं वैधर्म्यं चाभिधाय द्रव्यादीनां विनाशं निरूपयति विनाशस्त्विति । समवायिनाशाद् द्रव्यनाशो यथा तन्तुनाशात् पटनाशः । असमवायिकारणनाशाद् द्रव्यनाशो यथा परमाणुसंयोगनाशाद् द्व्यणुकनाशः । गुणस्य विनाशं निरूपयति गुणस्येति । द्वन्द्वान्ते श्रूयमाणस्य कारणपदस्य प्रत्येकमभिसम्बन्धः । समवाय्यसमवायिनिमित्तकारणनाशाश्च विरोधिगुणाश्चेति द्वन्द्वः । घटादिगतरूपादीनां समवायिघटादिनाशाद् नाशः । आद्यसंयोगविभागयोरसमवायिकारणयोर्नाशात्तत्संयोगविभागजविभागयोर्नाशः । अपेक्षाबुद्धिनिमित्तकारणनाशात् परत्वापरत्वद्वित्वपृथक्त्वादीनां नाशः । उत्तरशब्देन विरोधिना पूर्वशब्दस्योत्तरज्ञानेन पूर्वज्ञानस्य दुःखादिना सुखादेर्नाशश्च विरोधिगुणनाशः । कर्मणो नाशमाह कर्मण इति । समवायिकारण*नाशाद्यथा विनश्यदवस्थद्रव्यगतकर्मनाशः † । असमवायिनाशाद्यथा शरवेगनाशात्तद्गतकर्मणो नाशः । उत्तरसंयोगाद्यथा शरादेरभिघातात्तद्गतकर्मनाशः । (सामान्यविशेषसमवायानां नित्यत्वान्नाशो नास्तीति) ‡ अभावस्य विनाशमाह प्रागभावस्येति । अन्योन्याभावश्च § केषां चिन्मते नित्यः । यद्यपि घटे नष्टे ऽपि ‖ तदन्योन्या-

---

* कारणेति २-३ पु॰ नास्ति । † नाश इति नास्ति १ पु॰ ।

‡ ( ) एतन्मध्यगो ग्रन्थः २ पु॰ केवलं दृश्यते । § चशब्दो नास्ति २ पु॰ ।

‖ न हि घटे नष्टे इत्यादिः पाठः २ पु॰ ।

भावो विनश्यति तदा विनष्टघटस्य पटतादात्म्यापत्तेः अन्योन्याभावस्य तादात्म्याभावरूपत्वात्तथापि प्रतियोगिनाशे * सोपि नश्यतीत्यभ्युपगन्तव्यम् ॥

**उत्पत्तिस्तु द्रव्यगुणकर्मणां समवाय्यसमवायिनिमित्तकारणेभ्यः । तत्र समवायिकारणं त्रयाणां द्रव्यमेव । असमवायिकारणं द्रणकर्मणोः संयोग एव । गुणस्य त्वसमवायिकारणं क्व चित्समानजातीयं क्व चिदसमानजातीयं गुणान्तरं क्व चित्कर्म । निमित्तकारणं सर्वेषामेवेश्वरेच्छाऽदृष्टादीनि ॥**

उत्पत्तिं निरूपयति उत्पत्तिस्त्वित्यादिना । गुणस्येत्यन्तं स्पष्टम् । गुणस्य त्विति । समानजातीयं तन्त्वादिरूपं पटादिरूपस्यासमवायिकारणम् । असमानजातीयं द्व्यणुकपरिमाणं प्रति परमाणुद्वित्वम् सुखादिकं प्रत्यात्ममनःसंयोगः संयोगविभागवेगानां च कर्मासमवायिकारणम् । साधारणं निमित्तकारणमाह निमित्तेति । आदिशब्देन देशकालादि † ॥

**अन्योन्याभावप्रध्वंसाभावयोस्तु निमित्तादेव केवलादुत्पत्तिः ॥**

अभावस्योत्पत्तिमाह अन्योन्याभावेति । अभावस्य क्वापि समवायाभावान्न समवायिकारणं तदभावादेव तत्प्रत्यासन्नत्वलक्षणमसमवायिकारणमपि नेति केवलान्निमित्तादेवोत्पत्तिरित्यर्थः । अत्यन्ताभावप्रागभावयोर्नोत्पत्तिः । यद्यपि अन्योन्याभावस्य नोत्पत्तिः न हि घटरूपप्रतियोग्यनुत्पत्तावन्योन्याभावो नास्ति तथा सति अनुत्पन्नो घटः पटो न स्यादिति प्रत्ययो न स्यात् तथापि उत्पन्ने घटे ऽयम् अयं न भवतीति स्पष्टं ज्ञायते तदनुसारेण उत्पत्तिरुक्ता ॥

---

* तत्प्रतियोगिनाशे इति २ पु॰ पा॰ ।

† देशकालेश्वरेच्छादृष्टादीति पुस्तकेषु पाठः परं मूले एवेश्वरेच्छोल्लेखाद।दिपदग्राह्यत्वापेक्षा नास्तीति वस्तुतष्टीकाकृत्संमतो ऽयमेव पाठ इति भाति ।

नन्वभावो नाम कश्चित्पदार्थो नास्ति । येन तस्योत्पत्तिविनाशे विचारः कर्त्तव्यो भवेत् । तथा हि प्राभाकरः । भावान्तरमेव भावान्तरापेक्षया अभाव इति व्यवह्रियते । परं तु न व्यवहारविषयः पदार्थान्तरमस्ति मानाभावात् । नास्तीति प्रत्ययो वा नास्तीति व्यवहारान्यथानुपपत्तिर्वा तत्र मानमिति चेद् न । प्रत्यक्षस्यार्थापत्तेश्च भूतलादिभावालम्बनतया ऽन्यथासिद्धत्वात् । ननु नास्तीति प्रत्ययव्यपदेशयोर्भूतलालम्बनत्वे*घटवत्यपि भूतले अभावप्रतीतिव्यवहारौ स्याताम् इति चेद् मैवम् । केवलभूतलस्याभावव्यवहारहेतुत्वात् । घटवद्भूतलादन्यद् भूतलं च केवलम् । तत्रान्योन्याभावव्यवहारो घटपटादिस्वरूपेण । संसर्गाभावव्यवहारस्तु कपालभूतलादिना भवति । कपाले प्रागभावप्रध्वंसाभावयोर्व्यवहारो भूतले ऽत्यन्ताभावव्यवहारः । अतो नातिरिक्ताभावे मानं किं चित्पश्याम इति । यथाहुः ।

भावान्तरमभावो हि कया चित्तु व्यपेक्षया ।
भावान्तरादभावो ऽन्यो न कश्चिदनिरूपणात् ॥ इति ॥

अत्रोच्यते । अभावस्तावदतिरिक्तो ऽभ्युपेयते । अन्यथा तत्प्रतीतिव्यवहारयोरनालम्बनत्वापत्तिः । तथा हि । व्यवहारो हि व्यवहर्तव्यपदार्थज्ञानसाध्यः । न च घटादिस्वरूपं भूतलं वा व्यवहर्त्तव्यं किं त्वभावस्तज्ज्ञानं च तेन विना न भवति । अतो ऽभावो ज्ञानविषयो ऽतिरिक्तो ऽस्तीति प्रत्यक्षादेर्नान्यथासिद्धिः † । किं च भूतलादेरभावत्वे सत्प्रतियोगित्वापत्तिः । अभावस्य घटाभावः पटाभाव इति प्रतियोगिसापेक्षत्वात् । अपि च । स्वरूपस्यान्योन्याभावत्वे दूरात्तरुसमूहे नयनातिथीकृते एकानेकजिज्ञासा न स्यात् ‡ । स्वरूपग्रहणेनैवान्योन्याभावरूपभेदग्रहात् । रज्जावयं सर्प § इति भ्रमो न स्यात् । स्वरूपग्रहणेनैव विशेषस्य ज्ञातत्वात् ‖ । अविवेकाभावात् ¶ । नास्त्येव विभ्रमो मम मते सर्वज्ञानानां यथार्थत्वादिति चेद् न । रज्जुरियं सर्पो ऽज्ञायि मयेति सकललोकानुभवबाधप्रसङ्गात् । लौकिकपरीक्षकसिद्धभ्रमानङ्गीकारे गुरोरपि लघुत्वापत्तेः । अपि च ।

* भूतलालम्बनतयेति २ पु॰ पा॰ । † अतिरिक्तप्रत्यक्षादेर्नान्यथासिद्धिरिति १ पु॰ पा॰ ।
‡ संज्ञा सा न स्यादिति १ पु॰ पा॰ । § रज्जुश्चेयं सर्प इति २ पु॰ पा॰ ।
‖ स्वरूपग्रहणेनैवेयं रज्जुरिति ज्ञातत्वादिति ३ पु॰ पा॰ ।
¶ अविवेकाग्रहाभावादिति ३ पु॰ पा॰ ।

केवलं भूतलमभाव इत्यत्र * किमिदं कैवल्यं † नाम भूतलमात्रं चेद् न । ‡ घटवत्यपि भूतले अभावव्यवहारप्रसङ्गात् । अथ अभावाधारं भूतलं चेदभावस्वीकारापत्तिः । घटवद् भूतलभिन्नं भूतलं केवलम् इति चेत्तर्ह्यभावोऽपि स्वीकृत एव । अभावाधारत्वज्ञानमन्तरेण घटवद्भूतलभिन्नत्वज्ञानाभावात् । तस्माद्व्यवहारान्यथानुपपत्त्या प्रत्यक्षेण चातिरिक्तो ऽभावो ऽभ्युपगन्तव्यः । अतस्तस्योत्पत्त्यादिविचारः सफल एव ॥

ननु भवत्वभावो ऽधिकः तथापि तद्ग्राहकं प्रमाणं किमिति चेत् क्वचित्प्रत्यक्षं यथा इह भूतले घटो नास्तीति । क्वचिदनुमानं यथा वह्न्यभावेन धूमाभावज्ञानम् § ॥

ननु भूतले घटाभावग्रहो न प्रत्यक्षेण । इन्द्रियाभावयोः सम्बन्धानिरूपणात् । अपि तु योग्यानुपलब्ध्या स गृह्यते ‖ । इन्द्रियं चाधारमात्रग्रहोपक्षीणम् । ननु तर्ह्यन्धस्यापि त्वगिन्द्रियेणाधारशुक्ले वस्तुनि गृहीते ¶ नीलरूपप्रतियोगिस्मरणेन नीलाभावग्रहप्रसङ्गः । मम मते ** त्वन्धस्य †† प्रतियोगिनीलरूपग्राहकचक्षुषो ऽभावाद् नायं प्रसङ्ग इति चेद् न । ममापि हि तत्र प्रतियोगिग्राहकेन्द्रियेणाधारग्रहणाभावाद् ‡‡ नातिप्रसङ्ग इति चेदुच्यते । इह भूतले घटो नास्तीति ज्ञानम् इन्द्रियजन्यम् अपरोक्षत्वाद् रूपज्ञानवद् इत्यनुमानादभावस्येन्द्रियग्राह्यत्वम् §§ । न चापरोक्षत्वमसिद्धम् । इन्द्रियान्वयव्यतिरेकानुविधानेन तत्साधनात् । अतो ऽभावस्येन्द्रियग्राह्यत्व‖‖सिद्धिः । न चेन्द्रियाभावसम्बन्धाभावाद्बाधः । इन्द्रियसम्बद्धभूतलविशेषणविशेष्यभावस्यैवेन्द्रियाभावसम्बन्धत्वात् । तथा च अभावज्ञानमिन्द्रियजन्यम् ¶¶ अज्ञातकरणजन्यत्वाद् रूपादिज्ञानवत् । न चासिद्धिः । अनवस्थाभिया ऽनुपलब्धेरपि अज्ञाताया एव करणत्वाङ्गीकारात् । अभावस्यानैन्द्रियकत्वे *** वायौ रूपाभावो न गृह्यते । अनुपलब्धिसहकारिप्रतियोगिग्राहकेण चक्षुषा वायोराधारस्याग्रहणात् । मा भूत्प्रत्यक्षः रूपाभावस्तत्रानुमी-

---

* इत्यत्रैवेति २ पु॰ पा॰ । † केवलमिति २ पु॰ । ‡ न हीति १ पु॰ । २ पु॰ नेति नास्ति ।
§ यथा कारणाभावेन कार्याभावः इति २ पु॰ पा॰ । ‖ स हि गृह्यते इति २ पु॰ पा॰ ।
¶ आधारपटग्रहे इति ३ पु॰ पा॰ । ** मते इति नास्ति २ पु॰ ।
†† अन्धस्यापीति २ पु॰ पा॰ । ‡‡ अधिकरणग्रहाभावादिति २ पु॰ पा॰ ।
§§ इन्द्रियग्राहकत्वमिति १ पु॰ पा॰ । ‖‖ ग्राहकत्वेत्यत्रापि १ पु॰ पा॰ ।
¶¶ अभावज्ञानमपरोक्षम् इति ३ पु॰ पा॰ । *** अनिन्द्रियत्वे इति २ पु॰ पा॰ ।

यते इति चेद् न। लिङ्गाभावात्। रूपवत्तया अनुपलभ्यमानत्वस्य लिङ्गत्वे वायुविशेष्यकानुमितिरेव स्याद् न रूपाभावविशेष्यप्रतीतिः। तामन्तरेण वायौ रूपाभाव इति तद्विशेष्यकबुद्ध्यनुत्पत्तेः। तस्मात् क्व चिदिन्द्रियेण क्व चिन्नानुमानेनाभावग्रह इति सिद्धम्॥

**अपरं तु सकलं शास्त्रं सुबोधमिति॥**

**वैशिष्ट्यमन्यव्यावृत्तिः॥**

(ननु शास्त्रस्य त्रेधा प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति। ततः शास्त्रैकदेशसम्बद्धे प्रकरणे उद्देशलक्षणवत् परीक्षा कर्तव्येत्यत आह अपरमिति। एतत्पठित्वा अपरपठनं सुबोध*मित्यर्थः। यद्वा अपरे ऽप्यवान्तरभेदा विशेषणविशेष्यादयो लक्षणीया इत्यत आह अपरमिति। सुबोधत्वमेवाह वैशिष्ट्यमिति। यद्वा परीक्षादिकं भवतु सुबोधं लक्षणं तु विशेष्यादेरन्तर्भावितस्य कुतो नोक्तमित्यत आह वैशिष्ट्यमिति। नीलमुत्पलमित्यत्र नीलेनानीलव्यावृत्तिरुत्पले क्रियते। ततो व्यावृत्तिर्वैशिष्ट्यमित्यर्थः॥

**समानाधिकरणं व्यावर्त्तकं विशेषणम्॥**

वैशिष्ट्यं हि विशेषणाधीनम् इति तल्लक्षयति समानेति। व्यावर्तकं व्यावृत्तिबुद्धिजनकम् इतरव्यावृत्त्या समानम् एकम् अधिकरणं यस्य तत्तथा। दण्डरूपविशेषणस्यादण्डिव्यावृत्त्या सममेकस्मिन् दण्डिनि वर्तमानत्वात् सामानाधिकरण्यमित्यर्थः। व्यावर्त्तकमात्रमुपलक्षणं जटादावप्यस्तीति ततो विशिनष्टि समानेति। समानाधिकरणमित्युक्ते रूपरसादौ प्रसङ्गः। ततो व्यावर्त्तकेति। न हि रूपरसावित्युक्ते कुतश्चित् किं चिद्व्यावर्तते॥

**एकविभक्त्यन्तपदवाच्यत्वं समानाधिकरणत्वम्॥**

**व्यधिकरणं सद्व्यावर्त्तकमुपलक्षणम्॥**

**भिन्नविभक्त्यन्तपदवाच्यत्वं वैयधिकरण्यम्॥**

किं तत्समानाधिकरणमित्यत आह एकेति। एका समाना विभक्तिरन्ते ययोः पदयोः तद्वाच्यत्वं तदभिधेयत्वमित्यर्थः। एतत्तु रूढ्या ऽभिधीयते।

* अपरं सुबोधमिति २ पु॰ पा॰।

अवयवार्थस्तु स एव ग्राह्यः । पदवाच्यत्वं जटाभिस्तापस इत्यादौ वैयधिकरण्ये ऽप्यस्तीति तद्व्युदासाय एकविभक्त्यन्तेति ॥

विशेषणप्रतियोगित्वादुपलक्षणं लक्षयति व्यधिकरणमिति । इतरव्यावृत्त्या ( विविधं विरुद्धमधिकरणं यस्य स तथा । जटाकाशादीनामितरव्यावृत्त्या सहैव वर्तमानत्वनियमाऽभावात् । अवच्छेदकं व्यावर्तकम् ) * । विशेषणे ऽतिव्याप्तिवारणाय व्यधिकरणमिति । व्यधिकरणलक्षणं स्पष्टम् ॥

## जातिप्रत्यासत्तिरधिकरणत्वम् ॥

समानाधिकरणाद्यपेक्षितमधिकरणं लक्षयति जातिरिति । जातेः प्रत्यासत्तिः सम्बन्धो यस्य तत्त्वम् अधिकरणत्वमित्यर्थः । यद्वा अधिकरणत्वम् अधिकरणनिष्ठो धर्मः स च जातिसम्बन्धेनैवेत्यर्थः † ॥

ननु जातिप्रत्यासत्तेः सामान्यादावभावात् तस्याधिकरणत्वं न स्यात् तथा च प्रमेयत्वं सामान्यमभिधेयत्वं सामान्यमिति विशिष्टप्रत्ययो न स्यात् सामानाधिकरण्याभावात् । न च संयोगादिसम्बन्धाभावात् प्रमेयत्वस्याऽनधिकरणमेव सामान्यादीति वाच्यम् । अभावसमवायाद्यर्थमवश्य‡मङ्गीकृतस्वरूपसम्बन्धसत्त्वात् । अन्यथा भूतले घटाभाव इति प्रत्ययो न स्यादिति चेद् न । प्रमेयत्वादेरपि जातित्वात् । प्रमात्वमेव हि प्रमाविषये स्वरूपसम्बन्धेन वर्तमानम् § उपाधिव्यपदेशं लभते । एवमभिधात्वमेवाभिधेयत्वं पाकत्वमेव पाचकत्वं परम्परया औपाधिकक्रिया‖सम्बन्धात् तत्कर्तरि वर्तमानमुपाधिरित्युच्यते । न चैवं सामान्यादेर्जात्याधारत्वाज्जातिमत्त्वप्रसङ्गे ऽपसिद्धान्त इति वाच्यम् । साक्षात्सम्बन्धाभावेन जातिमत्त्वव्यपदेशाभावात् । तस्मात्परम्परया जातिसम्बन्धात् तत्प्रत्यासत्तिरधिकरणत्वं सामान्यादीनामविरुद्धमिति प्रमेयत्वं सामान्यमिति ¶ व्यपदेशो घटते । अथ वा जात्या सह एकार्थसमवायलक्षणप्रत्यासत्तिः सामान्यादिष्वस्तीति तेषामधिकरणत्वं न । यद्वा संयोगसमवायसम्बन्धाभ्यामेवाधारत्वमधिकरणत्वमतः सामान्यादौ तदौपचारिकमेवेति न कश्चिद्दोषः ॥

---

* ( ) एतन्मध्यस्थो ग्रन्थः १ पु॰ त्रुटितः । त्रुटिचिन्हमात्रं (v) तत्र दृश्यते ।
† एवशब्दो नास्ति २ पु॰ । ‡ अभावसमवाययोरवश्यमिति २ पु॰ पा॰ ।
§ वर्तमानं प्रमाद्वारा परम्परयेति २ पु॰ पा॰ । ‖ परम्परया पाकक्रियेति २ पु॰ पा॰ ।
¶ सामान्यमित्यादीति २ पु॰ पा॰ ।

**सकलमूर्त्तसंयोगित्वं विभुत्वम् ॥**

**विद्यमानयोः संबन्धो युतसिद्धिः ॥**

**अविद्यमानयोराधाराधेययोः संबन्धो ऽयुतसिद्धिः ॥**

प्रत्यासत्तिप्रसङ्गेन बुद्धिस्थं विभुत्वं लक्षयति सकलेति । घटादावतिव्याप्तिवारणाय सकलेति । संयोगो नाम युतसिद्धिरतस्तां लक्षयति विद्यमानयोरिति । पृथग्विद्यमानयोः पदार्थयोः कुण्डबदरयोरिव सम्बन्धो युतसिद्धिरित्यर्थः । तत्प्रतियोगित्वेनायुतसिद्धिं लक्षयति अविद्यमानयोरिति । पृथगविद्यमानयोरित्यर्थः । पृथक्पदाभावे असम्भव एव स्यात् । तदुक्तमयुतसिद्धिरपृथक्सिद्धिरिति । आधारेत्यादि स्वरूपकथनम् ॥

**साधनश्रेयोभिधायकं शास्त्रमिति ॥**

(शास्त्रस्य त्रेधा प्रवृत्तिः । का शास्त्रस्य त्रेधा प्रवृत्तिः किं च तत् शास्त्र)*मत आह साधनेति । साधनस्य सुखदुःखाभावसाधनस्य श्रेयोऽभिधायकं श्रेयःसम्बन्धाभिधायकं शास्त्रमित्यर्थः । तथा हि । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिना यागस्य स्वर्गादिसम्बन्धो बोध्यते अतः साधनश्रेयोभिधायकं शास्त्रमित्यर्थः । तथा चोक्तम्

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ इति ॥

शास्त्रत्वं तत्साधनादिति † च । (अनिष्टबोधकवचनस्य शास्त्रत्वं मा भूदिति हि साधनेत्युक्तम् । वेदवाक्यापेक्षितपदार्थबोधकत्वाद्वैशेषिकग्रन्थो ऽपि शास्त्रं भवति । इतिशब्दः समाप्तौ) ‡ ।

**सप्तद्वीपा धरा यावद्यावत्सप्त धराधराः ।**
**तावत्सप्तपदार्थीयमस्तु वस्तुप्रकाशिनी§ ॥ १ ॥**

**इति श्रीशिवादित्यविरचिता सप्तपदार्थी समाप्ता‖ ॥**

---

* ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ । † शास्त्रत्वं हि तच्छासनादि इति २ पु॰ पा॰ ।
‡ ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु॰ । § अयं श्लोकः २ पु॰ नोपलभ्यते ।
‖ इति श्रीव्योमशिवाचार्यविरचिता शब्दप्रकाशिनी सप्तपदार्थी समाप्तेति ४ पु॰ पा॰ । इति श्रीशिवादित्यमिश्रविरचितेति ५ पु॰ पा॰ ।

ग्रन्थस्य नामधेयं कुर्वन् ग्रन्थमाशास्ते सप्तेति । जम्बुप्लक्षकुशक्रौञ्च-शाकशाल्मलिपुष्करा इति सप्त द्वीपा यस्यां सा तथा धरा पृथ्वी यावद् वर्तते यावच्च सप्त धराधराः कुलपर्वता महेन्द्रमलयादयः यावत्कालम् आचन्द्रार्क-मिति यावत् । इयं सप्तपदार्थी वस्तूनां पदार्थानां प्रकाशिका ऽस्तु । आशं-सायां लोट् ॥

सौराष्ट्रदेशो ऽखिलदेशवर्यः सदाकरो दक्षिणभूमिनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ यत्रास्ति गोकर्णमहाबलेशः ॥ १ ॥
तद्देशजन्मा यतिरेकदण्डी सरस्वतीमस्तकमाधवाख्यः ।
सो ऽयं शिवादित्यकृतेरकार्षीट्टीकामिमां बालसुखप्रवृत्त्यै * ॥ २ ॥

माधवाख्ययतीन्द्रेण कृष्णातीरनिवासिना ।
कृता सप्तपदार्थ्यास्तु टीकेयं मितभाषिणी † ॥ ३ ॥

इति मितभाषिणी समाप्ता ‡ ॥

**शुभं भवतु ।**



* १.-२ श्लोकौ ३ पुस्तके न दृश्येते ।

† २-३ श्लोकौ २ पु॰ नोपलभ्येते । एतच्छ्लोकाग्रे-

श्रीमन्माधवसाधुवाक्यरचितां चातुर्यभावस्फुटां
भावाभावपदार्थबोधविधुरज्ञानेक्षणे दीपिकाम् ।
अज्ञानातितमोऽभिभूतविषये स्वल्पां बहुव्यापिनीं
कृत्वेमां मितभाषिणीं करधृतां पश्यन्तु तर्कं जनाः ॥

इति श्लोको ऽधिकः ३ पुस्तके ।

‡ इति श्रीमत्परमहंसपरिव्राजकाचार्यमाधवसरस्वतीनिर्मिता सप्तपदार्थीटीका समाप्तेति ३ पुस्तके

